# एको - सहाय्येन मुख-छद्माकृतीः कुरुत!



एको-रेखाटन-लेखन्या (स्केच पेन) मुख-छद्माकृतीनां निर्माणं न केवलं सुकरम्, अपि तु नितरां मनोविनोदनपरमपि।
समुज्ज्वलवर्णाः एको-लेखन्यः १२, २४, ३० इति संख्यात्मकेषु आवेष्टनेषु उपलब्धाः सन्ति।
अयं पुनरत्र विशेषः यत् एको- लेखन्यः जलाधारिताः निर्विषाश्च भवन्ति।
तस्माद् एव तासाम् उपयोगः सर्वथा सुरक्षितः।
विचार्यतां तावत्, कियान् भवेत् अम्बायाः प्रमोदः युष्माकं छद्माकृतीः विलोकयन्त्याः।

**विजयार्थं सहस्रशः पारितोषिकाणि।**
एको- फन-मुख-कलाकृत् स्पर्धायां सहभागिनः भवत। आवेष्टने सह प्रवेशपत्रिका सन्ति।




एवं एको नाम अक्षय्यः आनन्दः।

**Ekco®**

*युष्माकं चित्रकलाभिव्यक्तेः सर्वोत्तमं साधनम्।*



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अतीतम् - Completed or left behind
अद्यतनम् - Today's
अनूह्या - Unimaginable
अभ्यर्थी - Candidate
अहोभाग्यम् - Good fortune
आमलकम् - Gooseberry
इष्टवान् - Desired
उत्प्लवनम् - To jump
उत्पादनम् - Production
उद्गिरणम् - Belch
उन्मत्तता - Madness
उपाहारगृहम् - Restaurant
ऋजुतया - Straight
काचकम् - Glass
कूष्माण्डम् - Pumpkin
कौमुदी - Moonlight
ख्यातः - Famous
गृहगोधिका - Lizard
ग्रहः - Planet
घोरम् - Rigorous
डिण्डिमः - A small drum
तुला - Scale (weighing instrument)
तैलवर्णचित्रम् - Oilpainting
दायित्वम् - Responsibility
नोदनम् - To push
नौका - Steamer
परिणयति - Marries
परिविष्टम् - Served (food)
पूगः - Arecanut
प्रभूतम् - Plenty
भाण्डम् - A large vessel
मध्यस्थः - Middleman
मसृणम् - Smooth
वलिरः - Squint-eyed
वातायनम् - Window
विकत्थनम् - To boast
वितानम् - Pandal
विमुखा - Disinterested
विस्तरेण - In detail
सशपथम् - Making a solemn promise

# कुरुत लक्ष्यभेदः!

यूयं बालाः शूरवीराः नायकाः। कुशलतमाः 'फन-शूटर' अर्थात् लक्ष्यभेदप्रविणः भवितुम् इच्छथ। किमर्थं विलम्बः ? तर्हि पृष्ठमिदं पृथक् कृत्वा भितौ लगयत। उध्दरत प्रियतमं 'फन-शूटर'-क्रीडनकं। कुरुत कुरुत सम्यक् लक्ष्यभेदः।

20 गुणा: युयमेव लक्ष्यवेधकुशला:।

70 गुणा:

80 गुणा: त्वमेव आधुनिक-अर्जुन:!

ऊना: 10 गुणा: हन्त! कथं भग्नं काचपात्रम्।

40 गुणा:

10 गुणा:

ऊना: 10 गुणा:

फ्लाइंग सॉसर गन

मॉजर पिस्टल

रैट-ए-टैट

रैपिड फायर

HTA 1269.94

'फन-शूटर'-सम्पूर्ण-मालिकायाः आकर्षक-भित्तीचित्रार्थं अधोनिर्दिष्टं संकेतस्थानं प्रति लिख्यताम्। संकेतस्थानम्- ब्लो प्लास्ट लिमिटेड (टॉईज डिवीजन), लियो हाउस, 88-सी, ओल्ड प्रभादेवी रोड, बम्बई-400 025. स्वात्मनः नाम, वयः, शालायाः नाम, स्व-संकेतस्थानेन सह पत्रावेष्टन-प्रेषणं न विस्मर्तव्यम्।



# सस्यानि न आरोपितानि

| | |
|---|---|
| पत्नी –अद्य सस्यानि आरोपणीयानि इति सङ्कल्पितवती आसम्। किन्तु न शक्तवती एव। | I wanted to plant the seedlings today, but it was not possible. |
| पतिः –तर्हि सखीगृहतः आनीतानि सस्यानि प्रायः शुष्काणि जातानि स्युः। | In that case all of them you had brought from your friend's house must have withered away. |
| पत्नी –न तथा। किञ्चिदिव म्लानानि, तावदेव। अद्य जलेन तानि सिक्तवती अस्मि। श्वः आरोपयिष्यामि चेदपि जीवेयुः एव। | No, only a few appear to have. I have splashed water on all of them. So there is no botheration even if they are planted tomorrow. |
| पतिः –अद्य आदिनं किम् अन्यत् कार्यम् आसीत् भवत्याः? | What other work do you have for the day today? |
| पत्नि –'किं कार्यम् आसीत्?' इति प्रश्नस्तु सुलभः। गृहिणीनां कार्यभारः गृहस्थैः कथं वा ज्ञातुं न शक्येत? | To ask what else I have to do is easy. How would husbands know the botherations of housewives? |
| पतिः –आम्। प्रतिवेशिनीभिः सह जल्पनं, निद्रा- इत्यादीनि बहूनि कार्याणि भवन्ति तासाम्। | That is right. To chitchat with the neighbours, to sleep so on and so forth are what the housewives do. |
| पत्नी –एकं दिनं गृहकार्यभारः निरूढः चेत् प्रायः गृहिणीनां कार्यं कीदृशम् इति ज्ञायते। प्रतिवेशिनीभिः सह वार्तालापः अपि न करणीयः इति वा भवतः आशयः? तैलयन्त्रस्य वृषभः इव ....? | What all the housewives have to do would be clear if one does the household chores just for a day! You shouldn't talk to the neigh–bours, that is what you say? Like a bullock with the yoke on ....? |
| पतिः –अये, अलं कोपेन। परिहासार्थम् उक्तं मया। | No! Don't be angry! I was only joking! |




# चन्दमामा

संस्थापकः– 'चक्रपाणिः'      सञ्चालकः– 'नागिरेड्डी'

## मतीयसामरस्यम्

इतः शतात् वर्षेभ्यः पूर्वं सप्टेम्बर्मासस्य ११ दिनाङ्के अमेरिकादेशस्य चिकागोनगरे अन्ताराष्ट्रियं विश्वधर्मसम्मेलनं प्रवृत्तम्, यस्य च सुवर्णमहोत्सवः वर्षेऽस्मिन् आचर्यते। एतत् सम्मेलनं वयं तदर्थं स्मरामः यत् स्वामी विवेकानन्दः एतस्मिन् सम्मेलने न केवलं हिन्दुधर्मस्य प्रतिनिधिः सन्, अपि तु वेदज्ञानस्य विश्वधर्मस्य च प्रतिनिधिः सन् भागम् ऊढवान् आसीत्।

सम्मेलनेऽस्मिन् भाषणकर्तृषु विवेकानन्दस्य स्थानम् ३१ तमम् आसीत्। किन्तु विवेकानन्दः सम्मेलनाध्यक्षं जे.एच्. बारोस्वर्यं द्वित्रवारं सम्प्रार्थ्य निवेदितवान् यत् भाषणकर्तृषु अन्तिमं मां करोतु इति। अध्यक्षेण एषा प्रार्थना अनुमता। सभायाः अन्ते विवेकानन्दः यदा वेदिकाम् आरूढवान् तदा सभाङ्गणस्थाः सप्तसहस्रं जनाः उत्थाय निमेषद्वयं यावत् करताडनं कुर्वन्तः तं स्वागतीकृतवन्तः।

स्वामिनः विवेकानन्दस्य गाम्भीर्यद्योतकः वेषः, कान्तियुक्तं शरीरं, मधुरगम्भीरः कण्ठस्वरः च तत्र सम्मिलितान् सहस्रशः जनान् वशीभूतान् अकरोत्। सः अन्यमतानां विषये निन्दनात्मकम् एकं वचनम् अपि न उक्तवान् इति तु सभ्येषु महान्तं परिणामम् अजनयत्। तेन उक्तं यत् सर्वेषां विश्वासानाम् अन्तिमं लक्ष्यं 'देवः', तस्यअद्वितीयस्य लक्ष्यस्य प्राप्त्यर्थं स्थिताः विभिन्नाः मार्गाः एव विविधमतानि इति। मतीयसामरस्यं, विश्वशान्तिः, परमतसहिष्णुता-इत्येते अंशाः एव तस्य भाषणस्य सारभूताः अंशाः आसन्।

भारतीयाः विवेकानन्दवाणीं पत्रिकासु प्रकाशितां पठितवन्तः, तावदेव। किन्तु वयं न जानीमः यत् सा अत्युत्कृष्टा तेजस्विनी वाणी भारतीयेषु किमपि परिवर्तनम् अकरोत् वा न वा इति। एषः प्रश्नः एतदर्थम् उदेति यत् शतस्य वर्षाणाम् अनन्तरम् अपि भारतीयाः वयं मतीयसामरस्यादिकं केवलं वचनैः प्रतिपादयन्तः, मतीयसङ्घर्षादीनां मूकसाक्षिणः सन्तः जीवन्तः स्मः।

एतस्य शततमस्य वर्षस्य अनन्तरं वा किम् अस्माकं हृदये परिवर्तनं सम्भवेत्?

सम्पुटः–१०      अक्टोबर्–१९९३      सञ्चिका–७

प्रतिकृतिमूल्यं रू. ४-००  *  वार्षिकं ग्राहकशुल्कं रू. ४८-००



# नामनिर्वचनम्-१०

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।]*

**अजितः–** न जितः अजितः। यः अन्येन जितः न भवति, तन्नाम सामर्थ्यातिशयकारणतः यम् अन्यः जेतुं न शक्नोति सः अजितः। एषः शब्दः विष्णौ शिवे तीर्थङ्करे बुद्धे च रूढः। तथा च हेमकोषः– 'अजितः तीर्थकृद्भेदे बुद्धे विष्णावनिर्जिते' इति।

**भानुः–** भाति=चतुर्दशभुवनेषु स्वप्रभया दीप्यते इति भानुः। [भा (दीप्तौ)+नुः] भानुः नाम सूर्यः। सूर्यः चतुर्दशसु अपि भुवनेषु स्वप्रभया विराजते। अतः सः भानुः इति उच्यते।

भानुः नाम विष्णुः अपि। 'अतिभास्वरेण भास्करेण अपि उपजीव्यतेजाः भाति इति भानुः' इति विष्णुपरा व्युत्पत्तिः। लोके सूर्यः तेजोमयत्वेन प्रसिद्धः। किन्तु तस्य तेजोमयत्वं विष्णोः तेजसः अवलम्बनेन। एवं तेजोमयस्य अपि तेजसः कारणं विष्णुः। अतः सः 'भानुः' इति उच्यते। तथा च निरुक्तिः– 'रवेस्तेजस्करत्वाच्च भानुरित्यभिधीयते' इति। भानुशब्दस्य किरणः, दिनम्, शिवः, अर्कसस्यम् इत्यादयः अर्थाः अपि सन्ति।

**भानुप्रकाशः–** भानोः प्रकाशः इव प्रकाशः यस्य सः भानुप्रकाशः। यः तेजसा सूर्यसदृशः भवतिः सः भानुप्रकाशः।

**वल्लरी–** वल्लं संवरणम् ऋच्छति इति वल्लरी। [ऋ(गतौ)+इः+वा ङीष्] मञ्जरी, गुच्छम् इति वल्लर्याः पर्यायपदम्। 'वल्लरी' इत्यस्य लता इत्यपि अर्थः अस्ति एव।

**वल्लिः–** [वल्ल(संवरणे)+इन्] वल्लते संवृणोति वृक्षादीन् इति वल्लिः। तन्नाम लता। लता वृक्षादीन् आलम्बनार्थम् आवृणोति खलु? अतः सा 'वल्लिः' जाता।

---

**सूचना–** *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।*

**सङ्केतः- संस्कृतचन्दमामा, 'अक्षरम्', ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.**

**वार्ताविशेषः–**

# प्रधानमन्त्रिपदम् अलङ्कृतवत्यौ महिले






एषु दिनेषु देशद्वये महिला एव प्रधान-मन्त्रित्वेन चिता अस्ति। गतजूनमासस्य १४ दिनाङ्के श्रीमती टान्सू सिल्लर् टर्कीदेशस्य प्रधानमन्त्रित्वेन निर्वाचिता अभवत्। ततः द्वादशानां दिनानाम् अनन्तरं मिस्. किम् काम्बेल् केनडादेशस्य प्रधानमन्त्रिणी जाता। पूर्वोक्ते देशद्वये अपि कयाचित् अपि महिलया इतः पूर्वम् एतत् स्थानं न अलङ्कृतम् आसीत्।

टर्कीदेशस्य अध्यक्षः टर्गट ओजाल् गते एप्रिल्मासे दिवं गतः इत्यतः प्रधानमन्त्री सुलेमान् डेमिरल् अध्यक्षपदं प्राप्तवान्। तदा 'टूपातूपार्टी'नामकेन शासकपक्षेण नूतनः प्रधानमन्त्री चेतव्यः अभवत्। डेमिरल्-मन्त्रिमण्डले अर्थिकमन्त्रिस्थाने स्थिता ४७ वर्षीया श्रीमती सिल्लर् प्रधानमन्त्रिपद-निर्वाचने अभ्यर्थिनी जाता। ६५ वर्षीयः इस्मत्सेस्पिन् तस्याः प्रतिस्पर्धी जातः। सेस्पिन्वर्येण ३२० मतानि, सिल्लर्वर्यया च ५७४ मतानि च प्राप्तानि। सेस्पिन्वर्यः राजकीयक्षेत्रे ४० वर्षात्मकम् अनुभवं प्राप्तवान् आसीत्। तादृशम् अपि वर्षत्रयात्मकानुभवयुक्ता सिल्लर्वर्या पराजितवती इति तु विशेषः।

बास्परस्विश्वविद्यालये अध्ययनं कृत्वा सिल्लर्वर्या अर्थशास्त्रे पदवीं प्राप्य अमेरिकास्थे येलुविश्वविद्यालये उन्नताध्ययनं कृतवती। ततः सा टर्कीदेशस्य विविधेषु विश्वविद्यालयेषु उपप्राध्यापकत्वेन १९८३ तम वर्षस्य अनन्तरं प्राध्यापकत्वेन च कार्यं कृतवती। १९९० तमे वर्षे 'टूपातु'पक्षस्य सदस्या जाता। १९९१ तमे वर्षे डेमिरल्मन्त्रिमण्डले अर्थमन्त्रिणी जाता। यदा सा अर्थमन्त्रिणी आसीत् तदवधौ– तन्नाम २० मासेषु– सा देशस्य वाणिज्यमौल्यपरिष्करणार्थं 'स्टाक् एक्स्चेञ्ज्'व्यवहारे अभिवृद्धिम् आनेतुं च प्रयत्नं कृतवती। देशस्य युवजनतायाः स्त्रीणां च प्रगत्यर्थम् अपि सा कार्यं कृतवती।

टर्की-लोकसभायां पुरुषाः एव अत्यधिकाः। तत्रापि येषां वयः ५० वर्षेभ्यः अधिकं ते एव अधिकाः। एवं स्थिते अपि अल्पवयस्का काचित् महिला प्रधानमन्त्रित्वेन चिता इति तु महत्त्वपूर्णः विषयः। टर्कीदेशस्य शासनाधिकारः युवजनतायाः अधीनः जायमानः अस्ति इति तु चरित्रार्हा घटना इति विशेषज्ञाः वदन्ति। सिल्लर्वर्या शासनक्रमे विशेषपरिवर्तनं कुर्यात् चेदपि न आश्चर्यम्।

केनडादेशस्य प्रधानमन्त्रिणी अपि मध्यवयस्का। तस्याः वयः ४६ वर्षाणि। सा पूर्वं वाङ्कोवर् इत्यत्र न्यायवादिनी आसीत्। ततः 'प्रोग्रेस्कन्सर्वेटिव्पार्टी'नामकं शासकपक्षं प्रविश्य क्रमशः उन्नताधिकारं प्राप्नुवती पञ्चवर्षाभ्यन्तरे उन्नतं स्थानं प्राप्तवती। ब्रियान् मल्रोनीवर्यस्य मन्त्रिमण्डले सा विधि-नियमविभागस्य, ततः

रक्षणविभागस्य मन्त्रिणी आसीत्।

तत्काले देशस्य वाणिज्यं मन्दगत्या प्रचलति स्म। ततः ऋणभारः प्रवृद्धः। वाणिज्यसंस्थाः वाणिज्यं स्थगितवत्यः। ततः महती निरुद्योगसमस्या देशे उद्भूता। ततः देशस्य आर्थिकी स्थितिः शोचनीयतां गता। तत्काले देशे प्रजाभिप्रायसङ्ग्रहणं प्रवृत्तम्।




'राज्याङ्गे परिवर्तनम् आनेतव्यम्' इति एषः सर्वकारस्य आशयः प्रजाभिः तिरस्कृतः।

एतस्य परिणामतः प्रधानमन्त्री मलुरोनीवर्यः त्यागपत्रं समर्पितवान्। तदा शासकपक्षेण काम्बेलुवर्या प्रधानमन्त्रित्वेन चिता।

जून् १३ दिनाङ्के प्रवृत्ते निर्वाचने काम्बेलुवर्यया ५३% मतानि प्रधानप्रतिस्पर्धिना जीन् चारेस्टुवर्येण ४७% मतानि च प्राप्तानि, यश्च पर्यावरणविभागस्य मन्त्री आसीत्। द्वितीये स्तरे अन्यः प्रतिस्पर्धी जिम् एड्वर्ड्सुवर्यः काम्बेलुवर्यायाः प्रोत्साहं कृतवान् इत्यतः सा विनायासं जयं प्राप्तवती।

ब्रिटिष्-पार्लिमेण्टरी-व्यवस्थाम् अनुसरति केनडादेशे आगामिनि नवेम्बर्मासे महानिर्वाचनं प्रचलिष्यति। तदा यदि कन्सर्वेटिवुपक्षः एव जयं प्राप्नुयात् तर्हि काम्बेलुवर्यायाः प्रधानमन्त्रित्वम् अनुवर्तेत।

दशभ्यः वर्षेभ्यः पूर्वं पीरीट्रूडुवर्यः प्रधानमन्त्रिपदात् यदा च्युतः अभवत् ततः आरभ्य केनडादेशे लिबरलुपक्षः प्रतिपक्षत्वेन अस्ति।

'युवकः बिल् क्लिण्टनुवर्यः अमेरिकादेशस्य अध्यक्षः जातः यत् तेन केनडादेशीयाः असूयां प्राप्तवन्तः सन्ति' इति जनाः परिहासार्थं वदन्ति। किन्तु 'केनडाप्रजाः युवजनतायै अधिकारं दातव्यः इति निश्चितवत्यः इत्यतः काम्बेलुवर्या विजयं प्राप्तवती' इति राजकीयज्ञाः अभिप्रयन्ति। काम्बेलुवर्यायाः क्लिण्टनुवर्यस्य च वयः समानम्। गिटार्वाद्यस्य वादने चेस्क्रीडायां च विशेषरुचिः काम्बेलुवर्यायाः। रष्यन्साहित्ये अपि तस्याः रुचिः अस्ति। वयं भावयामः यत् नवेम्बर्मासे प्रचलिष्यमाणस्य निर्वाचनस्य साहाय्येन सा स्वपदस्य स्थिरतां प्राप्नुयात् इति।

### प्रधानमन्त्रिण्यः इतः पूर्वं स्थिताः

*श्रीमती गोल्ड् मेयर्। (इस्रेल्) * श्रीमती इन्दिरा गान्धी। (भारतम्) * श्रीमती सिरिमावो भण्डारनायके। (श्रीलङ्का) * श्रीमती मार्गरेट् थ्याचर्। (इङ्ग्लेण्ड्) * श्रीमती बेनजीर् भुट्टो। (पाकिस्थानम्) * श्रीमती बेगं खलीदा जिया। (बंगलादेशः)



# पितामहीवचनम्

पूर्वं कश्चन कृषिकः आसीत्। तस्य पत्नी कृष्णवेणी। तयोः एका पुत्री जाता। सुन्दरी इत्येव तस्याः नाम। सुन्दरी यदा एकवर्षीया जाता तदा एव तस्याः पिता दिवङ्गतः। कृष्णवेणी महता कष्टेन पुत्रीं पालितवती।

कानिचन वर्षाणि अतीतानि। सुन्दरी प्रौढा जाता। किन्तु दौर्भाग्यवशात् सुन्दरी किञ्चित् मन्दमतिः। विवाहवयस्का चेदपि बालैः सह मार्गे क्रीडति स्म सा।

एकस्मिन् दिने सायङ्काले मार्गे क्रीडति स्म सुन्दरी। किञ्चित्कालानन्तरं पिपासया सा जलं पातुम् इच्छन्ती पुरतः स्थितं गृहं गत्वा जलं पृष्टवती। तद्गृहस्य गृहिणी सुन्दर्यै जलं यच्छन्ती उक्तवती– "प्राप्तवयस्का अपि भवती मार्गे क्रीडन्ती भवति खलु? एतादृशीं भवतीं को वा परिणयेत्? हुँ, भवत्याः विवाहः गगनकुसुमायते" इति।

प्रतिवेशिन्याः वचनेन कुपिता सुन्दरी जलचषकं तत्रैव क्षिप्त्वा रोदनं कुर्वती गृहं गतवती। सुन्दर्याः रोदनस्य कारणं ज्ञात्वा तस्याः मातामही वात्सल्येन उक्तवती– "वत्से, रोदनं मास्तु। भवत्याः विवाहः न भविष्यति इति केन उक्तम्? कोऽपि राजकुमारः भवतीं परिणेष्यति" इति।

मातामह्याः वचनेन सुन्दरी मनसः समाधानं प्राप्तवती, सन्तुष्टा च। तद्दिनादारभ्य सुन्दरी कमपि निरीक्षते।

एकस्यां रात्रौ जलं पातुम् इच्छन्ती कृष्णवेणी निद्रातः उत्थितवती। तस्मिन् समये सुन्दरी वातायनद्वारा बहिः पश्यति स्म। अन्धकारे उपविष्टां पुत्रीं दृष्ट्वा आश्चर्येण कृष्णवेणी पृष्टवती– "अत्र उपविश्य भवती किं करोति?" इति।



तदा सुन्दरी उक्तवती– "यदि अहं निद्रां करोमि, तर्हि माम् अन्विष्यन् आगतः राजकुमारः अस्माकं गृहम् अज्ञात्वा गच्छति किल! तदर्थम् अत्रैव उपविष्टवती" इति।

सुन्दर्याः मनसः मूलं कारणं ज्ञात्वा कृष्णवेणी श्वश्रूविषये कुपिता। सा श्वश्र्वाः मञ्चस्य समीपं गत्वा– "पश्यतु भवत्याः कार्यम्" इति वदन्ती श्वश्रूम् उत्थापयितुं प्रयत्नं कृतवती।

किन्तु श्वश्र्वाः शरीरं हिमम् इव अतीव शीतलम् आसीत्। बहुसमयतः पूर्वम् एव श्वश्र्वाः प्राणाः गताः स्युः। एकत्र ज्येष्ठा श्वश्रूः दिवङ्गता। अपरत्र पुत्री सुन्दरी कस्यचित् राजकुमारस्य प्रतीक्षां कुर्वती उन्मत्ता इव व्यवहरति। एतत् सर्वं दृष्टवत्याः कृष्णवेण्याः महत् दुःखं जातम्।

मासद्वयम् अतीतम्। पुत्र्याः सुन्दर्याः विवाहः करणीयः इति विचिन्त्य कृष्णवेणी बहुधा प्रयत्नं कृतवती। किन्तु सुन्दरीं परिणेतुं तद्ग्रामीणः कोऽपि अग्रे न आगतः। अनन्तरं कस्यचित् मध्यस्थस्य द्वारा अन्यस्मात् ग्रामात् कश्चन वरः आगतवान्। कुरूपी सः वलिरः अपि। वधूः यथाकथमपि भवतु, पुत्रस्य विवाहः करणीयः इति चिन्तयन्तौ वरस्य मातापितरौ वधूं द्रष्टुं पुत्रेण सह आगतवन्तौ।

वधूपरीक्षायां सुन्दरी वरं पृष्टवती– "भवान् कस्य देशस्य राजकुमारः?" इति।

तदा वरस्य माता उक्तवती– "मम पुत्रः कृषिकः। क्षेत्रे कार्यं करोति" इति।

एतत् श्रुत्वा सुन्दरी– "कृषिकेण सह मम विवाहः सर्वथा न शक्यः। मां परिणेतुम् राजकुमारः आगमिष्यति" इति वदन्ती कोपेन गृहस्य अन्तः गतवती।

"किञ्चित् बुद्धिमान्द्यं स्यात् इति विचिन्त्य वयम् अत्र आगतवन्तः। एतस्याः उन्मत्तता एतावती अधिका इति न ज्ञातम् आसीत्" इति वदन्ती कुपिता वरस्य माता पुत्रेण पत्या च सह ततः गतवती।

तस्यां रात्रौ कृष्णवेणी पुत्री सुन्दरीं बोधितवती– "अस्मादृशैः सामान्यजनैः सह राजकुमारस्य सम्बन्धः सर्वथा असम्भवः"

इति। किन्तु सुन्दरी मातुः वचनं न अङ्गीकृतवती। सा मातरम् उक्तवती– "मातामही भवत्याः अपेक्षया वयसा ज्येष्ठा। तया एव उक्तम् यत्– भवतीं परिणेतुम् कश्चित् राजकुमारः एव आगमिष्यति इति। अतः राजकुमारस्य आगमनपर्यन्तम् अहं प्रतीक्षां करिष्यामि" इति।

पुत्र्याः एतादृशस्य स्वभावस्य कारणतः कृष्णवेणी अतीव खिन्ना।

पुनः कदाचित् रात्रौ सुन्दरी राजकुमारस्य प्रतीक्षां कुर्वती वातायनपार्श्वे उपविष्टवती आसीत्। एतत् दृष्ट्वा खिन्ना कृष्णवेणी गृहस्य पृष्ठभागे विद्यमानायां वाटिकायां तिन्त्रिणीवृक्षस्य अधः उपविश्य श्वश्र्वाः विषये क्रोधेन– "भवत्याः वचनेन मम पुत्री सर्वदा राजकुमारम् एव ध्यायन्ती उन्मत्ता इव व्यवहरति। मम पुत्र्याः जीवनम् एव नाशितवती भवती" इति मृतां श्वश्रूं तर्जयितुम् आरब्धवती।

तस्य तिन्त्रिणीवृक्षस्य शाखायाम् कश्चन पिशाचः उपविष्टवान् आसीत्। सः श्वश्रूम् उद्दिश्य तर्जयन्त्याः कृष्णवेण्याः पुरतः आगत्य उक्तवान्– "भगिनि! भवत्याः श्वश्रूः मृता। अपि च सा भवत्याः अपेक्षया ज्येष्ठा। तादृशीं ज्येष्ठाम् एवं तर्जयति किल! एतत् न उचितम्" इति।

पिशाचं दृष्ट्वा कृष्णवेणी क्षणकालं भीता। तथापि पिशाचेन 'भगिनि' इति यत्



सम्बोधनं कृतं तेन किञ्चित् धैर्यं प्राप्य सा– "किं करोमि भोः? मम कष्टं कं निवेदयामि?" इति वदन्ती स्वकीयं दुःखं प्रकटीकृतवती।

कृष्णवेण्याः विषयं श्रुत्वा पिशाचः क्षणकालं चिन्तयित्वा– "भगिनि, यदि अहं मनुष्यरूपेण जन्म प्राप्तवान् स्याम्, तर्हि अहम् एव भवत्याः पुत्रीं परिणयेयम्। भवतु। अहं श्वः मध्यरात्रे आगत्य भवत्याः पुत्री राजकुमारस्य चिन्तातः यथा विमुखा स्यात् तथा करिष्यामि" इति उक्त्वा ततः गतवान्।

अनन्तरदिने मध्यरात्रे पिशाचः राजकुमारः इव वेषं धृत्वा अश्वारूढः सन् सुन्दर्याः गृहस्य दिशि आगतवान्।



वातायनपार्श्वे स्थितवती सुन्दरी राजकुमाररूपं पिशाचं दृष्ट्वा महता सन्तोषेण उक्तवती– "मातामह्याः वचनम् असत्यं कदापि न भविष्यति। राजकुमार, गृहस्य अन्तः आगच्छतु कृपया" इति।

तदा पिशाचः उक्तवान्– "अहं तु राजकुमारः। अतः सर्वदा महाभवनेषु एव वासः मम। तादृशः अहं भवत्याः कुटीरस्य अन्तः कथं वा आगच्छामि? तस्मिन् लघु कुटीरे वायुः अपि न वाति। अतः भवती एव बहिः आगच्छतु। कौमुद्यां वायुविहारं कृत्वा आगच्छाव" इति।

सुन्दरी पिशाचस्य वचनम् सन्तोषेण अङ्गीकृत्य मौनं गत्वा अश्वस्य उपरि उपविष्टवती। पिशाचः सुन्दरीं दूरे विद्यमानम् एकम् अरण्यं नीतवान्।

किञ्चित्कालानन्तरं सुन्दरी पिशाचम् उक्तवती– "राजकुमार, एतादृशे घोरे अरण्ये मम भयं भवति। अतः भवान् किमपि सम्भाषणं करोतु" इति।

पिशाचः क्षणकालं विचिन्त्य एकां काल्पनिकीं घटनां स्मृत्वा उक्तवान्– "ह्यः अहं मम अग्रजं विषं पायितवान्" इति।

"किमर्थम्?" इति पृष्टवती सुन्दरी।

तदा पिशाचः उच्चैः हसन् उक्तवान्– "यदि मम अग्रजः जीवति तर्हि अहं युवराजपदवीं प्राप्तुं न शक्नोमि किल! तदर्थं तस्मै विषं दत्तवान्" इति।

"एवं वा? तथापि भवतः कार्यम् अनुचितं किल!" इति उक्तवती सुन्दरी।

तदा पिशाचः हसन् उक्तवान्– "उचितानुचितम् अहं न चिन्तयामि। द्वित्रेषु दिनेषु मम वृद्धं पितरम् अपि यमलोकं प्रेषयिष्यामि। मासाभ्यन्तरे एव अहं महाराजः भविष्यामि। सेनया सह पार्श्वराज्यं गत्वा युद्धं कृत्वा तस्य राज्यस्य राजकुमारीं बन्धने स्थापयिष्यामि च" इति।

पिशाचस्य आशयः यत्– राजकुमाराः दर्शनेन सुन्दराः चेत् अपि तेषां राक्षसीमनोभावः भवति इति सुन्दरी जानातु इति। किन्तु पिशाचस्य व्यवहारं दृष्ट्वा अपि सुन्दरी कामपि प्रतिक्रियां न दर्शितवती।

क्षणकालानन्तरं पिशाचः झटिति सुन्दरीम् अश्वतः अधः अवतार्य उक्तवान्– "रात्रेः तृतीये यामे मया सेनाधिपतिना सह रहस्यं चिन्तनं करणीयम् अस्ति। तं विषयं विस्मृत्य एतावत्पर्यन्तं भवत्या सह व्यर्थं समययापनं कृतवान्। इदानीम् अहं गच्छामि" इति।

पिशाचस्य वचनं श्रुत्वा भीता सुन्दरी पृष्टवती– "इदानीं तु मध्यरात्रः। एतादृशे घोरारण्ये माम् एकाकिनीम् एव त्यक्त्वा गच्छति वा भवान्? यदि सिंहो वा व्याघ्रो वा आगमिष्यति तर्हि मम का गतिः?" इति।

तदा पिशाचः उपहासपूर्वकं हसन्– "सिंहः वा आगच्छतु, व्याघ्रो वा आगच्छतु। तदर्थं मया किं करणीयम्? अहं तु राजकुमारः। यदि अहम् इच्छामि तर्हि शताधिकाः महिलाः आगत्य मां परिणेतुम् पङ्क्तिशः तिष्ठेयुः। भवती एका नास्ति चेत् मम न कापि हानिः" इति उक्त्वा अश्वं चोदयन् वेगेन ततः निर्गतवान्।

सुन्दरी उच्चैः रोदनं कुर्वती उपविष्टवती। तदा अश्वारूढः कश्चन युवकः तत्र आगत्य सुन्दरीं पृष्टवान्– "भवती का? किमर्थं मध्यरात्रे एतादृशे घोरारण्ये उपविश्य रोदनं कुर्वती अस्ति?" इति।

तदा "अहं सुन्दरी" इति उक्तवती सुन्दरी। 'सुन्दरी' इति नामश्रवणमात्रेण महता सन्तोषेण अश्वारूढः सः युवकः अधः अवतीर्य उक्तवान्– "मम सौभाग्यम् एतत्।




सार्धैकवर्षतः सुन्दर्याः अन्वेषणं कुर्वतः मम प्रयत्नः अद्य सफलः। सुन्दरि! अश्वम् आरोहतु। मम राज्यं गच्छाव" इति।

सुन्दरी तं युवकं संशयदृष्ट्या एव पश्यन्ती पृष्टवती– "भवान् राजकुमारः एव वा? तर्हि मम मातामह्याः वचनं सत्यं वा?" इति।

तदा सः युवकः उक्तवान्– "आम्, अहं राजकुमारः एव। वृथा समयं मा यापयतु। शीघ्रम् उपविशतु अश्वस्य उपरि" इति।

सुन्दरी महता सन्तोषेण अश्वम् आरुह्य उपविष्टवती। सः युवकः सुन्दरीं स्वराजभवनं नीतवान्।

अनन्तरदिने प्रातः पुत्री सुन्दरी नास्ति इति ज्ञात्वा अतीव दुःखिता कृष्णवेणी चिन्तया

एकत्र उपविष्टवती आसीत्। तावता राजभटाः तत्र आगत्य तां शिबिकायाम् उपवेश्य प्रासादं नीतवन्तः। यदा एषा प्रासादद्वारसमीपं गतवती तदा महाराज्ञी स्वयं आगत्य स्वागतं कृतवती।

एतत् सर्वं स्वप्नः इव विचित्रं भासते स्म कृष्णवेण्याः। कृष्णवेण्याः भावं ज्ञात्वा महाराज्ञी– "भगिनि! एतत् सर्वं विचित्रम् इव भासेत भवत्याः। अतः किं प्रवृत्तम् इति भवत्याः समीपे कथनं मम कर्तव्यम्" इति वदन्ती एव प्रवृत्तं सर्वं वक्तुम् आरब्धवती– "मम ज्येष्ठः पुत्रः विजयः। सः किञ्चित् मन्दमतिः। एकदा केचन राजकुमाराः अस्माकं नगरम् आगतवन्तः। ते विजयस्य व्यवहारं दृष्ट्वा 'कापि राजकुमारी भवन्तं न परिणेष्यति। परिचारिकासु कयाचित् सह भवतः विवाहः भवेत्' इति वदन्तः तस्य उपहासं कृतवन्तः।

तेषां वचनेन अतीव दुःखितः विजयः गृहम् आगतवान्। तस्य दुःखस्य कारणं ज्ञात्वा मम श्वश्रूः विजयं लालयन्ती– 'वत्स! चिन्तां मा करोतु। भवतः विवाहः सामान्यया सह न, अपि तु सुन्दर्या सह' इति समाधानं कृतवती।

तस्मात् दिनादारभ्य मम पुत्रः विजयः सुन्दर्याः अन्वेषणम् आरब्धवान्। तदर्थम् एव सः इतः निर्गतवान् आसीत्। सौभाग्यवशात् भवत्याः पुत्री सुन्दरी तेन दृष्टा। तौ परस्परम् अनुरक्तौ। अतः यावच्छीघ्रं तयोः विवाहं कारयामः। तयोः तु दायित्वं किमपि नास्ति। तौ सन्तोषेण उद्याने विहरन्तौ सुखेन जीवताम्" इति।

महाराज्ञ्याः वचनं श्रुत्वा महता आनन्देन कृष्णवेणी उक्तवती– "भगिनि! ललाटलिखितं केन वा परिमार्जयितुं शक्यते? भवत्याः पुत्रः एव तस्याः पतिः भवेत् विधिनियमः। सुन्दर्याः विषये तस्याः मातामह्याः वचनं सत्यम् एव जातम्" इति।

"स्यात्। ज्येष्ठानां वचनं सर्वदा हितकरं सत्यं च भवति" इति मन्दहासपूर्वकम् उक्तवती सुन्दर्याः भाविश्वश्रूः महाराज्ञी।





# विचित्रं पुष्पम्

## ५

(सेनाधिपतिः गम्भीरसिंहः दक्षिणसमुद्रतीरं गत्वा प्रत्यागत्य वस्तुस्थितिं महाराजं निवेदितवान्। राजगुरुः उक्तवान् यत् उत्तरप्रान्ते विकसितानि शताब्दिकापुष्पाणि एव समुद्रस्थं राक्षसम् आकर्षन्ति इति। एतस्याः समस्यायाः निवारणार्थं साहाय्यं प्राप्तुं राजा— 'साहसशीलानाम् अटविकजातीयानां वासस्थानं शृङ्गमयपर्वतं प्रति गन्तव्यम्' इति निश्चितवान्। तदनन्तरम्....)

राजा प्रतापवर्मा आगच्छन् अस्ति इति वार्ता यदा राजभटाः आगत्य निवेदितवन्तः तदा अटविकनायकः शुम्भः नितरां सन्तुष्टः। सः तत्क्षणे एव सर्वेषां मेलनस्य सूचकं डिण्डिमं वादितवान्। अल्पे एव काले अटविकाः सर्वे विशाले अङ्गणे सम्मिलिताः। तान् उद्दिश्य शुम्भः उक्तवान्— "अचिरात् एव महाराजः अत्र आगमिष्यति इति श्रूयते। अतः अस्माभिः सर्वैः तस्य स्वागतार्थं सिद्धैः भवितव्यम्। महाराजस्य यथोचितं सत्कारः करणीयः च" इति।

महाराजस्य आगमनस्य वार्ता तेषु सर्वेषु हर्षम् अजनयत्। सर्वे ततः गृहं गत्वा विविधैः वर्णमयैः वेषैः आत्मानम् अलङ्कृत्य पुनः तस्मिन् एव अङ्गणे सम्मिलिताः। सर्वे महाराजस्य प्रतीक्षां कुर्वन्तः स्थितवन्तः।



अल्पे एव काले अश्वानां खुरपुटध्वनिः तैः श्रुतः। क्षणकालस्य अनन्तरम् अश्वाः अपि दृष्टिगोचराः जाताः। उभौ अश्वारोहिणौ सैनिकौ ध्वजं गृहीत्वा अग्रे आगच्छन्तौ आस्ताम्। तयोः पृष्ठतः खड्गहस्ताः चत्वारः सैनिकाः आगच्छन्तः आसन्। तेषां पृष्ठतः राजा युवराज्ञी च आस्ताम्। तौ उभयतः अङ्गरक्षकौ आस्ताम्। दलपतिः राजानम् अनुसृत्य आगच्छन् आसीत्। गणस्य अन्ते पुनः त्रयः सैनिकाः आसन्।

राजपरिवारः अङ्गणसमीपम् आगतः। तदा अङ्गरक्षकौ प्रथमम् अश्वात् अवतीर्य राज-युवराज्ञ्योः अश्वयोः समीपं गतवन्तौ। अटविकनायकः शुम्भः हस्तौ उन्नीय राजानं नमस्कृतवान्। राजा मन्दहासं प्रकटयन् अश्वात् अवतीर्य प्रीत्यतिशयेन शुम्भम् आलिङ्गितवान्। ततः पुत्रीं प्रदर्शयन्– "एषा मम पुत्री प्रियंवदा" इति पुत्र्याः परिचयम् उक्त्वा दलपतिं प्रदर्शयन्– "एषः अस्माकं दलपतिः वीरसिंहः" इति दलपतेः परिचयम् उक्तवान्। शुम्भः तौ अपि नमस्कृतवान्।

शुम्भः ततः तान् सर्वान् छायायुक्तस्य वृक्षस्य समीपं नीतवान्। वृक्षस्य अधः वेत्रनिर्मितं पीठद्वयम् आसीत्। पीठद्वयम् अपि वस्त्रेण आवृतम् आसीत्। शुम्भः राजानं युवराज्ञीं च आसने उपवेश्य आनन्दाश्रूणि स्रावयन् उक्तवान्– "महाप्रभो! अद्य वयं सर्वे आत्मानं धन्यं मन्यामहे। यतः अनागरिकाणाम् अस्माकं वासस्थानम् अपि आगतः अस्ति तत्रभवान्। युवराज्ञी अपि आगता इति तु अस्माकम् अहोभाग्यम्। एतत् सुदिनम् अस्माकम्" इति।

अनन्तरं काश्चन युवतयः फलानां स्थालिकाम् आनीय राज्ञे युवराज्ञ्यै च दत्तवत्यः। राजपरिवारजनेभ्यः अपि दत्तवत्यः। सर्वे सन्तोषेण तं फलाहारं स्वीकृतवन्तः। तत्समये मृदुस्वरेण मधुरं सङ्गीतं गीतं ताभिः युवतीभिः। मधुरगम्भीरः वाद्यध्वनिः अपि श्रावितः अटविकैः। फलाहारसमाप्तेः अनन्तरं नृत्यन्त्यः काश्चन युवतयः वेणुदण्डान्



गृहीत्वा आगत्य पङ्क्तिरूपेण स्थितवत्यः। ततः वाद्यध्वन्यनुगुणं पदानि स्थापयन्त्यः वर्णमयैः वेषैः विभूषिताः अन्याः काश्चन युवतयः अग्रे आगत्य नर्तनं कृतवत्यः। एतत् नृत्यं दृष्ट्वा राजा युवराज्ञी चापि नितरां सन्तुष्टौ।

नृत्यं समाप्तम्। अनन्तरं राजा आसनात् उत्थाय परितः दृष्टिं प्रसारयन् तत्र सम्मिलितान् स्त्री-पुरुष-बाल-वृद्धान् सकृत् दृष्टवान्। सर्वे हर्षं प्रकटयन्तः राज्ञः जयकारं कृतवन्तः। राजा हस्तोन्नयनेन अभिनन्दनानि सूचयन् तान् उद्दिश्य उक्तवान्– "भवन्तः अस्मद्विषये यत् गौरवम्, आदरम्, अभिमानं च प्रदर्शितवन्तः तदर्थं वयं कृतज्ञाः स्मः। केभ्यश्चित् दिनेभ्यः पूर्वं राजधान्यां प्रवृत्तासु क्रीडास्पर्धासु अत्रत्याः केचन भागम् ऊढ्वा पारितोषिकाणि प्राप्तवन्तः इति तु महतः सन्तोषस्य विषयः। तत्सन्दर्भे अहम् उक्तवान् आसं यत् भवत्कुलीयेभ्यः सैन्ये अवकाशः कल्पयिष्यते इति। तदेव पुनः उच्चारयन् अत्र सशपथं वदामि यत् मदीयं वचनम् अहम् अवश्यं पालयिष्यामि इति। प्रकृतं तु अहम् अन्यस्य महाकार्यस्य निमित्तम् अत्र आगतः। एतस्य प्रदेशस्य, समग्रस्य माणिक्यपुर्याः च उपरि महती विपत् आपतिता अस्ति। दक्षिणसमुद्रस्य मध्यभागात् उत्थितः कश्चन राक्षसः एतत्प्रदेशे विकसितैः शताब्दिकापुष्पैः आकृष्टः सन् मध्यरात्रसमये उत्तरदिशि किञ्चिद्दूरम् आगत्य अग्रे गमनार्थं मार्गम् अजानन् प्रतिगत्य समुद्रं प्रविशति इति श्रूयते। तस्य एतादृशात् गमनागमनात् समुद्रतीरस्थाः जनाः, ग्रामाः, पशुपक्षिणः, क्षेत्राणि, वृक्षाः च नाशं प्राप्नुवन्तः सन्ति। सौभाग्यवशात् सः इतोऽपि एतं प्रदेशं न आगतः। तस्य घोरराक्षसस्य सम्मुखीकरणं नाशः वा मानवमात्रेण असाध्यम्। राजगुरुः वदति यत् शताब्दिकापुष्पैः आकृष्टः सः उत्तरदिशि गमनार्थं प्रयत्नं कुर्वन् अस्ति इत्यतः, तस्य वासस्थलं प्रति एव शताब्दिकापुष्पाणि प्रापितानि चेत् प्रायः समस्या परिहृता भवेत् इति। एतस्मिन् कार्ये

भवतां साहाय्यम् अपेक्ष्यते" इति।

राज्ञः वचनानन्तरं तत्र सर्वत्र मौनं व्याप्तम्। सर्वे परस्परं मुखं पश्यन्तः स्थितवन्तः। तदा अटविकनायकः शुम्भः उक्तवान्– "प्रभो, राज्यरक्षणार्थं प्राणार्पणम् अपि प्रियम् एव भावयामः वयम्। राक्षसात् देशस्य रक्षणार्थं प्रयत्नः सर्वेषाम् आद्यं कर्तव्यम्। अन्यच्च देशस्य उपरि आपतिता विपत् अचिरात् एव अत्रापि आपतेत् एव। अतः प्राणान् पणीकृत्य कार्यं कर्तुं सिद्धाः वयम्। अस्माभिः किं करणीयम् इति आज्ञापयतु तावत्" इति।

नायकस्य वचनं समर्थयन्तः सर्वे सभासदः करताडनं कृतवन्तः। तावता जनानां मध्यतः कश्चन युवकः उत्थाय अग्रे आगत्य राज्ञः पुरतः स्थितवान्।

तं पश्यन्ती युवराज्ञी महाराजं मन्दस्वरेण उक्तवती– "तानि विचित्रपुष्पाणि उपायनीकृतवान् एषः एव" इति।

मन्दस्वरेण उक्तम् अपि तत् वचनं श्रुत्वा युवराज्ञीं पश्यन्– "तत् पुष्पं विपदं स्वागतीकरोति इति अजानन् तानि उपायनीकृतवान् अहम् एव" इति उक्त्वा सः युवकः राजानं पश्यन् पुनः उक्तवान्– "मया अज्ञानेन वा कृतस्य दोषस्य प्रायश्चित्तं भवेत् एव खलु? अतः अहम् एव तानि शताब्दिकापुष्पाणि राक्षसवासस्थलं प्रापयिष्यामि। अनुज्ञादानेन अनुग्रहणीयः



अहम्" इति।

"साधु, उत्तुङ्ग साधु! साहसकार्ये प्रवृत्तिं प्रदर्शयतः भवतः धैर्यं नितरां श्लाघ्यम्। एतदर्थं भवता प्रथमं नायकस्य अनुमतिः प्राप्तव्या भवति" इति उक्तवान् राजा।

उत्तुङ्गः स्वनायकं दृष्टवान्। तदा अटविकनायकः शुम्भः– "उत्तुङ्ग, साधुव्यवहारः भवतः। तस्य राक्षसस्य निवारणार्थं कः मार्गः चिन्तितः भवता?" इति उत्तुङ्गं पृष्टवान्।

"महाराजेन यथा सूचितं तथा अहं शताब्दिकापुष्पाणि सङ्गृह्य नौकायाम् आरोप्य राक्षसम् अनुसृत्य गत्वा तदीये वासस्थले पातयिष्यामि। तदनन्तरं तेन



राक्षसेन माणिक्यपुरीम् उद्दिश्य आगन्तव्यं न भविष्यति" इति उक्तवान् उत्तुङ्गः।

"सम्यक् चिन्तितं भवता। किन्तु एतस्य कार्यस्य साधनार्थं कानिचन दिनानि आवश्यकानि भवेयुः खलु? तावत् भवतः कुटुम्बस्य पोषणभारं वयं निर्वक्ष्यामः" इति उक्तवान् राजा।

"उत्तुङ्गस्य कुटुम्ब तु अत्यल्पम्। बाल्ये एव तदीयौ मातापितरौ परलोकम् आश्रितवन्तौ। अतः एकमात्रभगिनी इदानीं तेन सह तिष्ठति" इति उक्तवान् शुम्भः।

तावता जनानां मध्यतः काचित् पञ्चदशवर्षीया तरुणी पुष्पमालां हस्तेन गृहीत्वा अग्रे आगतवती।

"एषा एव मम भगिनी रजनी" इति भगिनीं प्रदर्शयन् महाराजम् उक्तवान् उत्तुङ्गः।

रजनी हस्ते स्थितां मालां युवराज्ञ्याः कण्ठे स्थापितवती। तदा परितः स्थिताः जनाः सन्तोषेण करताडनं कृतवन्तः। युवराज्ञी उत्तुङ्गं पश्यन्ती– "यावत् भवान् न प्रत्यागमिष्यति तावत् एषा भवतः भगिनी अन्तःपुरे एव स्थास्यति" इति उक्त्वा रजनीं पश्यन्ती पृष्टवती– "अस्माभिः सह स्थितिः अनुमता खलु भवत्या?" इति।

रजनी लज्जया शिरः अवनमय्य अङ्गीकारपूर्वकं शिरः चालितवती।

अनन्तरं राजा शुम्भम् उद्दिश्य– "तानि शताब्दिकापुष्पाणि युवराज्ञ्याः प्रियंवदायाः अतिप्रियाणि। तानि राजोद्याने वर्धनीयानि इति तस्याः इच्छा आसीत्। किन्तु राजगुरुणा यदा उक्तं– तानि शापग्रस्तानि इति, तदा एषा ताम् इच्छां परित्यक्तवती। तानि पुष्पाणि सकृत् वा पुनः द्रष्टव्यानि इति तस्याः प्रबला इच्छा। अतः एव सा मया सह आगतवती। दूरात् तेषां पुष्पाणां दर्शनं शक्यं खलु?" इति पृष्टवान्।

"तत् तु शक्यम्। तत्र कोऽपि क्लेशः नास्ति" इति उक्तवान् अटविकनायकः शुम्भः।

"आर्य! यदि भवतः अनुज्ञा स्यात् तर्हि युवराज्ञीं नीत्वा तानि पुष्पाणि अहम् एव

प्रदर्शयेयम्। अश्वम् आरुह्य गतं चेत् शीघ्रम् एव प्रत्यागन्तुं शक्येत" इति उक्तवान् उत्तुङ्गः।

"अस्तु। अचिरात् एव प्रस्थाय शीघ्रम् एव प्रत्यागन्तव्यम्। भवद्भ्यां सह अङ्गरक्षकाः अपि भवन्तु" इति युवराज्ञीम् उक्त्वा पुनः शुम्भं पश्यन्– "भवतां वसतिं समग्रतया द्रष्टुम् इच्छामि अहम्" इति उक्तवान् राजा।

ततः युवराज्ञी उत्तुङ्गः च एकैकम् अश्वम् आरुह्य ततः प्रस्थितवन्तौ। अङ्गरक्षकाः तौ अनुसृतवन्तः। सुदूरप्रयाणस्य अनन्तरं तैः दुस्तरः सङ्कुचितः च मार्गः प्राप्तः। तदा उत्तुङ्गः युवराज्ञीम् उक्तवान्– "युवराज्ञि! दुस्तरे एतस्मिन् मार्गे मन्दया गत्या जागरूकतया अश्वः चालनीयः। मार्गम् उभयतः स्थितानां वृक्षाणां शाखाः अधोमुखम् अवनताः सन्ति" इति।

एतेन मार्गेण यदा किञ्चिद्दूरं गतं तदा उत्तुङ्गः– "युवराज्ञि! तत्र पश्यतु। आकाशचुम्बिषु वृक्षेषु सुवर्णकान्तियुक्तानि कानिचन पुष्पाणि विराजन्ते। तानि एव शताब्दिकापुष्पाणि!" इति वदन् तानि पुष्पाणि हस्तसङ्केतेन प्रदर्शितवान्।

अपूर्वाणि तानि पुष्पाणि सहजस्थितौ पश्यन्ती युवराज्ञी आत्मानम् एव विस्मृतवती। पर्वतशिखरे वेणुसदृशेषु उन्नतवृक्षेषु विद्युत् इव कान्त्या शोभमानानि तानि दृष्ट्वा अवर्णनीयम् आनन्दम्



अनुभवन्ती– "इतोऽपि किञ्चित् अग्रे गच्छाम वा?" इति पृष्टवती।

"मास्तु युवराज्ञि! इतोऽपि अग्रे अश्वाः गन्तुं न शक्नुवन्ति। पादाभ्यां गमनं यद्यपि शक्यते, किन्तु तत् महाश्रमसाध्यम्" इति उक्तवान् उत्तुङ्गः।

युवराज्ञी तानि पुष्पाणि पश्यन्ती किञ्चित्कालम् अचेतना इव निश्चलं स्थितवती। पुनः किञ्चित्कालस्य अनन्तरम् उत्तुङ्गः पृष्टवान्– "युवराज्ञि! प्रतिगच्छाम वा?" इति।

"अतिसुन्दराणि अपि एतानि पुष्पाणि शापग्रस्तानि सन्ति इति तु महतः खेदस्य विषयः। तथापि, अग्रे एतेषां पुष्पाणां

शापविमोचनं यथा भवेत् तथा काचित् अनूह्या घटना प्रवर्तेत इति भावयाम वयम्'' इति उक्त्वा सकृत् दीर्घं निःश्वस्य तानि पुष्पाणि पुनः एकवारम् आतृप्ति दृष्ट्वा अश्वं प्रतिनिवर्तितवती युवराज्ञी।

यदा तौ प्रत्यागतौ तदा राजा राजधानीं प्रतिगन्तुं सिद्धः आसीत्। पितरं दृष्ट्वा उक्तवती युवराज्ञी– ''अपूर्वं दृश्यं दृष्टम् अद्य। किन्तु तेषां पुष्पाणां सङ्ग्रहः अतिकष्टकरः इति भाति मम'' इति।

''कष्टकरेषु कार्येषु प्रवृत्तिः एव अस्मभ्यं विशेषतः रोचते'' इति उक्तवान् शुम्भः।

राजा उत्तुङ्गं स्वसमीपम् आहूय– ''भवान् कार्ये सफलतां प्राप्नोतु इति आशासे। अचिरात् एव भवतः आगमनं भवेत् खलु? भवतः आगमनं न केवलम् अहं प्रतीक्षमाणः भविष्यामि, अपि तु प्रजाः सर्वाः प्रतीक्षमाणाः भविष्यन्ति। देशहितार्थे कार्ये भवतः प्रवृत्तिः तु नितरां प्रशंसार्हा अस्ति'' इति उक्त्वा शुम्भं पश्यन्– ''उत्तुङ्गस्य निर्गमनस्य अनन्तरं तस्य भगिनीं रजनीं राजप्रासादं प्रापयन्तु'' इति उक्त्वा आसनात् उत्थितवान्।

युवराज्ञी रजन्याः स्कन्धे हस्तं स्थापयित्वा, प्रीत्या तस्याः हस्तं निपीड्य अश्वम् आरूढवती। राजा अपि अश्वम् आरूढवान्। तम् अनुसरन्तः दलनायकः अन्ये सैनिकाः च अश्वम् आरूढवन्तः।

शुम्भः करौ योजयित्वा महाराजं नमस्कृतवान्। शुम्भस्य अनुज्ञां प्राप्य राजा सपरिवारं ततः निर्गतवान्।

राज्ञः निर्गमनस्य अनन्तरं शुम्भः उत्तुङ्गस्य स्कन्धे प्रीत्या हस्तं संस्थाप्य तेन सह वसतिं प्रति गच्छन्– ''उत्तुङ्ग! अद्य वीरोचिता प्रवृत्तिः प्रदर्शिता भवता। वंशस्य अस्मज्जातेः च कीर्तिः वर्धिता। यद्यपि साधनीयं कार्यम् अपायकरम् अस्ति, तथापि भवान् कुलदेवतायाः अनुग्रहेण विजयं सम्पाद्य सकुशलं प्रत्यागमिष्यति इत्यत्र विश्वासः अस्ति मम'' इति उक्तवान्। –(अनुवर्तते)






# अवतारपुरुषः

**आ**रब्धे उत्तमे कार्ये साफल्यं प्राप्तव्यम् एव इति महत्या आकाङ्क्षया त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अयि राजन्! एतादृशे घोरे अपि श्मशाने भवता क्रियमाणः परिश्रमः व्यर्थः न वा? भवतः जीवनस्य उद्देशः कः? महती कीर्तिः सम्पादनीया इति, उत ऐश्वर्याधिकारादयः प्राप्तव्याः इति? यदि मनुष्यः आवेशं विना उद्वेगं विना च शान्तमनस्कः सन् स्वजीवनस्य लक्ष्यं चिन्तयति तर्हि एव सः महत् अपि कार्यं लीलया साधयितुं समर्थः भवति। अन्यथा उद्देश्यानुसारं फलं प्राप्तुं न शक्नोति सः। दिव्यनाथनामकस्य पण्डितस्य अपि एतादृशी एव परिस्थितिः। स्वकार्ये भवान् जागरूकः भवतु इति उद्देशेन अहं दिव्यनाथस्य कथां श्रावयामि। शृणोतु तावत्" इति।

## वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं सिंहसेनः नाम कश्चित् राजा आसीत्। गाननाट्यादिना देशस्य न किमपि प्रयोजनम् इति महाराजस्य आशयः। एकदा सः मन्त्रिणम् आहूय स्वकीयम् अभिप्रायं प्रकटितवान्।

तदा मन्त्री उक्तवान्– "प्रभो, एतदर्थं किमर्थं चिन्ता भवतः? गायकचित्रकारादिभ्यः कठोरां परीक्षाम् आयोजयाम। तासु परीक्षासु ते यदि अनुत्तीर्णाः भवन्ति तर्हि तान् आस्थानात् निष्कासयाम" इति।

मन्त्रिणः वचनं राजा अङ्गीकृतवान्।

अनन्तरदिने मन्त्री गायकान् आहूय उक्तवान्– "वयं यदा इच्छामः तदा भवद्भिः गातव्यम्। भवतां गानेन वृष्टिः भवेत् अपि" इति।

गायकाः परिश्रमेण गीतवन्तः। किन्तु वृष्टिः तु न आगता। तस्मात् कारणात् सर्वान् गायकान् आस्थानतः निष्कासितवान् राजा।

अनन्तरं मन्त्री चित्रकारान् शिल्पिनश्च आहूय– "भवद्भिः देवस्य रूपकल्पना करणीया" इति आज्ञापितवान्। चित्रकाराः देवस्य चित्रं लिखितवन्तः। शिल्पिनः च देवस्य विग्रहान् निर्मितवन्तः।

एतत् सर्वं दृष्ट्वा मन्त्री पृष्टवान्– "देवस्य स्वरूपम् एवमेव भवति इति वक्तुं प्रमाणं किम्?" इति।

चित्रकाराः शिल्पिनश्च एतस्य प्रश्नस्य समाधानं वक्तुम् असमर्थाः जाताः। अतः राजा तान् अपि आस्थानात् निष्कासितवान्।

अनन्तरं मन्त्री नटान् नर्तकीः च आहूय उक्तवान्– "अहम् एकां कथां वदामि। अनन्तरं महाराजस्य पुरतः सा एव कथा विना सम्भाषणम् अभिनेतव्या" इति।

अनन्तरं मन्त्री नटान् उद्दिश्य काञ्चित् कथाम् उक्तवान्। नटाः तस्याः कथायाः अभिनयं महाराजस्य पुरतः कृतवन्तः। किन्तु राजा कथां ज्ञातुं समर्थः न जातः। अतः नटान् अपि आस्थानतः निष्कासितवान् राजा।

अन्तिमतया मन्त्री आस्थानस्य कवीन् पण्डितान् च आहूय उक्तवान्– "युवराजः ज्ञानसम्बन्धिविद्याः न जानाति। सः सर्वाणि

शास्त्राणि अपि यथा जानीयात्, महान् पण्डितः च यथा स्यात् तथा भवद्भिः युवराजः पाठनीयः" इति।

ते सर्वे युवराजं परीक्षितवन्तः। सामान्यम् अपि विषयं ज्ञातुं न शक्नोति स्म युवराजः। 'अहं युवराजः' इति तस्य महान् अहङ्कारः अपि। एतादृशं युवराजं पाठयितुं न शक्ताः इति कारणतः पण्डितान् कवीन् चापि आस्थानतः निष्कासितवान् राजा।

एतस्मिन् एव काले दिव्यनाथनामकः पण्डितः सर्वत्र स्वप्रतिभां प्रदर्शयन्, अटन् आसीत्। सः एकदा सिंहसेनस्य पार्श्वराज्यं गतवान्। तस्य राज्यस्य राजा महासेनः। महासेनस्य आस्थाने यद्यपि पण्डिताः सन्ति, किन्तु तेषां ज्ञानम् अतीव अल्पम्। दिव्यनाथः महासेनस्य आस्थानं गतवान्। तं दृष्ट्वा तत्रत्याः पण्डिताः सर्वे उपहासं कृतवन्तः।

तथापि दिव्यनाथः न विचलितः। सः राजानम् उद्दिश्य उक्तवान्– "महाप्रभो, भवतः आस्थाने मम आवश्यकता अस्ति। भवदीयाः आस्थानपण्डिताः सर्वे अल्पज्ञानिनः। तान् बोधयितुं मां विना न कोऽपि अन्यः समर्थः भवति" इति।

तदा महासेनः हसन् पृष्टवान्– "मम आस्थानपण्डिताः अल्पज्ञानिनः स्युः। भवतु नाम। भवान् महान् पण्डितः इति निरूपयितुं किम् अस्ति प्रमाणम्?" इति।

तदा दिव्यनाथः उक्तवान्– "भवतः



पण्डितेषु एकं मम शिष्यत्वेन स्वीकरिष्यामि। एकमासाभ्यन्तरे तस्मिन् किमपि परिवर्तनं दृश्यते वा इति भवान् स्वयं परिशीलयितुम् अर्हति" इति।

तदा महासेनः अनङ्गीकारपूर्वकं शिरः चालयन् उक्तवान्– "मम दूरबन्धुः सिंहसेननामकः राजा पार्श्वराज्यं पालयन् अस्ति। कलाकाराणां पण्डितानां च विषये तस्य सदभिप्रायः नास्ति। यदि भवान् तस्य सिंहसेनस्य पुरतः भवतः प्रतिभासामर्थ्यं निरूपयिष्यति, तर्हि मदीयान् आस्थान-पण्डितान् सर्वान् अपि भवान् शिष्यत्वेन स्वीकर्तुम् अर्हति" इति।

महासेनस्य वचनं श्रुत्वा दिव्यनाथः



पार्श्वराज्यस्य सिंहसेनस्य समीपं गत्वा स्वकीयम् आशयं प्रकटितवान्। तदा सिंहसेनः उक्तवान्– "कवीनां पण्डितादीनां च विषये मम सदभिप्रायः नास्ति। अतः भवान् गच्छतु इतः" इति।

अनुक्षणं दिव्यनाथः उक्तवान्– "महाप्रभो, अहं न केवलं कविः, पण्डितश्च, सर्वासु कलासु प्रावीण्यं प्राप्तवान् अस्मि अपि। बहवः राजानः मह्यम् आश्रयं दातुम् आसक्तिं प्रदर्शितवन्तः। किन्तु अहं तत् न अङ्गीकृतवान्। कालिदासः यथा भोजराजस्य आश्रयं प्राप्तवान् तथैव मया भवतः आश्रयः प्राप्तव्यः इति मम इच्छा। तदर्थम् एव अहम् अत्र आगतवान्" इति।

दिव्यनाथस्य वचनेन सन्तोषम् अनुभवन् सिंहसेनः पृष्टवान्– "किं तत् मम वैशिष्ट्यं भवता दृष्टं, येन ममैव आश्रयः प्राप्तव्यः इति भवतः इच्छा उत्पन्ना?" इति।

तदा दिव्यनाथः उक्तवान्– "महाप्रभो, भवान् कारणपुरुषः अवतारपुरुषः च। अतः एव अहं भवतः आश्रयम् इष्टवान्। एतस्मात् एव कारणात् भवतः आस्थानस्य पण्डिताः सर्वे विफलाः जाताः अपि" इति।

तदा सिंहसेनः किञ्चिदिव चिन्तयन् पृष्टवान्– "मम विशेषतायाः आस्थान-पण्डितानां विफलतायाश्च कः सम्बन्धः? तेषां पराजयः तु तेषाम् एव असामर्थ्येन खलु?" इति।

तदा दिव्यनाथः उक्तवान्– "प्रभो! भवतः अधिकारावधौ राज्ये काऽपि न्यूनता नास्ति। प्रकृतिः शान्ता अस्ति। वातावरणम् आह्लादकरम् अस्ति। अस्मिन् देशे अकाले मृत्युः, अकाले वृष्टिः च असाध्या। भवतः इच्छाम् उल्लङ्घ्य प्रकृत्यां परिवर्तनं कर्तुं न शक्तवन्तः भवदीयाः आस्थानगायकाः। तदर्थम् एव ते विफलाः जाताः" इति।

दिव्यनाथस्य प्रशंसया सन्तुष्टः सिंहसेनः पृष्टवान्– "गायकानां विषये एवं स्यात्। किन्तु चित्रकाराः शिल्पिनः च कथं विफलाः जाताः?" इति।

एतत् श्रुत्वा दिव्यनाथः उक्तवान्– "प्रभो, एकस्मिन् काले परशुरामः

अवतारपुरुषः आसीत्। श्रीरामस्य काले परशुरामस्य तेजः सहजतया न्यूनं जातम्। भगवान् अस्मिन् काले भवतः रूपेण अवतारं कृतवान् अस्ति। भवति महत् तेजः अस्ति। चित्रकाराः शिल्पिनः च अवतारपुरुषाणां चित्रेषु शिल्पेषु च तेजसः कल्पनां कर्तुं न शक्तवन्तः। यतः पूर्वजानाम् अवतारपुरुषाणां प्राबल्यं न्यूनं जातम् अस्ति। अतः एव शिल्पिनः चित्रकाराः च विफलाः जाताः" इति।

तदा सिंहसेनः उक्तवान्– "अहम् एव देवः इति वक्तुं प्रमाणं किम्? अहं मायामन्त्रादिकं तु न जानामि" इति।



राज्ञः संशयं परिहरन् दिव्यनाथः उक्तवान्– "महाप्रभो! श्रीरामः यद्यपि देवः, किन्तु सः मायामन्त्रादिकं न कृतवान्। गौतमबुद्धः कदापि मायामन्त्रादिकं न दर्शितवान्। तेषां लोककल्याणकार्येण एव तान् देवान् अभिज्ञातवन्तः जनाः। अपि च यः भक्तिमान् भवति, सः केवलं देवं द्रष्टुं समर्थः भवति। बाल्यात् अपि मम दैवे भक्तिः अधिका। भवति साक्षात् भगवन्तम् एव पश्यन् अस्मि अहम्। भवान् भगवतः स्वरूपम् अस्ति" इति। एतादृशानि प्रशंसावचनानि श्रुत्वा सिंहसेनः अतीव सन्तुष्टः। दिव्यनाथस्य बुद्धिमत्तां प्रशंसन् सः पुनः पृष्टवान्– "नटाः नर्तक्यः च कथं विफलाः?" इति।

तदा दिव्यनाथः उक्तवान्– "प्रभो! दैवांशसम्भूतैः याः कथाः उच्यन्ते, ताः केवलं नटाः उत्तमरूपेण अभिनेतुं समर्थाः भवन्ति। भवान् कथां यदि वदति तर्हि ते नटाः अभिनेतुं शक्नुवन्ति। यः कोऽपि सामान्यः अल्पज्ञानी वा कथां वदति चेत् ते सर्वथा अभिनेतुं असमर्थाः एव भवन्ति" इति।

दिव्यनाथस्य एतानि वचनानि श्रुत्वा राज्ञः पार्श्वे उपविष्टः मन्त्री क्रुद्धः। तथापि राजाज्ञानुसारं सः कांश्चन नटान् आहूतवान्। राजा रहस्येण तान् एकां कथाम् उक्तवान्। अभिनयं कर्तुं तान् सूचितवान् च। ते अभिनीतवन्तः। अभिनयं दृष्ट्वा सन्तुष्टः सिंहसेनः उक्तवान्– "दिव्यनाथस्य वचनं



सत्यम् एव जातम्। एतेषाम् अभिनयः अपूर्वः'' इति।

तदा मन्त्री उपहासमिश्रितेन स्वरेण उक्तवान्– ''एतैः किम् अभिनीतम् इति मया तु न ज्ञातम्। दिव्यनाथः ज्ञातवान् वा? किमिति कृपया निवेदयतु प्रभो!'' इति।

मन्त्रिणः आशयं ज्ञात्वा दिव्यनाथः मन्दहासपूर्वकम् उक्तवान्– ''अवतारपुरुषाणां लीलाः वेदान्तिभिः ब्रह्मादिदेवताभिः अपि ज्ञातुम् अशक्याः। अल्पज्ञानिनः ज्ञातुं न शक्नुवन्ति'' इति।

तदा सिंहसेनः महता सन्तोषेण करताडनं कुर्वन् उक्तवान्– ''दिव्यनाथ, मयि सुप्तरूपेण स्थितम् अवतारपुरुषत्वं जागरितवान् अस्ति भवान्। धन्यवादाः। भवान् मम पुत्रं सकलशास्त्रपारङ्गतं यदि करोति तर्हि अहं कृतज्ञः। भवतः उपकारं कदापि न विस्मरामि'' इति।

''युवराजः मया पाठनीयः चेत् तत् मम सौभाग्यम् इति चिन्तयामि। तं सर्वाणि शास्त्राणि पाठयितुं मम एकं दिनं पर्याप्तम्'' इति उक्तवान् दिव्यनाथः।

अनन्तरं दिव्यनाथः युवराजम् एकत्र आहूय उक्तवान्– ''भवतः पिता अवतारपुरुषः। यदि भवान् अपि पितृवत् अवतारपुरुषः भवितुम् इच्छति, तर्हि मार्गद्वयम् अस्ति। प्रथमः मार्गः– सप्ताहे दिनद्वयम् उपवासः करणीयः। वृक्षे अधोमुखं लम्बमानेन तपः करणीयम्। दश वर्षाणि एवं करोति चेत् सकलशास्त्रपारङ्गतः भविष्यति भवान्। द्वितीयः मार्गः तु सुखकरः। भवतः जिह्वायाः उपरि अहं बीजमन्त्रं लिखामि। तेन अपि भवान् पण्डितः भविष्यति'' इति।

तदा युवराजः उत्साहेन– ''द्वितीयः मार्गः एव मम इष्टतरः'' इति वदन् जिह्वां बहिः प्रसारितवान्।

दिव्यनाथः आनन्देन युवराजस्य स्कन्धे हस्तं स्थापयन् उक्तवान्– ''द्वितीये मार्गे अपि केचन नियमाः सन्ति। जिह्वायां बीजमन्त्रस्य लेखनस्य अनन्तरं भवता कोपः सर्वथा त्यक्तव्यः। शान्तमनस्केन भवितव्यम्। जातिमतकुलानां विषये विना

भेदभावं भवता ज्येष्ठाः आदरणीयाः। कनिष्ठाः साभिमानं द्रष्टव्याः। अन्यस्य अभिप्रायः श्रोतव्यः अपि। सर्वदा हसन्मुखः स्यात् भवान्। यदि एतान् नियमान् न पालयिष्यति, तर्हि मया लिखिते बीजमन्त्रे विद्यमानम् एकैकम् अपि अक्षरम् एकैकः पिशाचः भूत्वा भवन्तं पीडयिष्यति। एतद्विषये किं वदति भवान्?" इति।

युवराजाय एतत् सर्वम् अतीव सुलभम् इति अभासत। अतः सः दिव्यनाथेन उक्तान् नियमान् सर्वान् अङ्गीकृतवान्।

अनन्तरं दिव्यनाथः युवराजस्य जिह्वायाः उपरि बीजमन्त्रं लिखितवान्। महाराजस्य समीपं गत्वा उक्तवान् च– "प्रभो! युवराजः अत्यन्तं चतुरः अस्ति। अल्पे एव काले सः पण्डितः जातः" इति।

दिव्यनाथस्य वचनं श्रुत्वा सिंहसेनः सन्तुष्टः। किन्तु पार्श्वे एव उपविष्टः मन्त्री उक्तवान्– "राजन्! कठोपनिषदि मम केचन सन्देहाः सन्ति। युवराजं पृष्ट्वा मम सन्देहम् निवारयिष्यामि" इति।

मन्त्रिणः वचनेन किञ्चिदिव विचलितः दिव्यनाथः उक्तवान्– "प्रभो! युधिष्ठिरः अल्पं बालकम् अभिमन्युं चक्रव्यूहस्य भेदनार्थं प्रेषितवान्। किन्तु तस्य परिणामः कीदृशः आसीत्? अतः दश वर्षाणि यावत् युवराजः अस्माभिः सुखेन पोषणीयः। कष्टकरीम् अपि विद्यां युवराजः सुलभतया



अभ्यसितुं समर्थः। किन्तु अन्यान् बोधयितुम् इदानीम् एव समर्थः नास्ति सः" इति।

तदा सिंहसेनः किञ्चित् सन्देहेन पृष्टवान्– "मम पुत्रः विद्यावान् जातः अस्ति इत्यत्र प्रमाणं किम्?" इति।

महाराजस्य सन्देहं निवारयितुम् इच्छन् दिव्यनाथः उक्तवान्– "युवराजस्य व्यवहारः एव अत्र प्रमाणम्। युवराजस्य व्यवहारे किमपि परिवर्तनं दृश्यते वा इति अद्य आरभ्य परिशीलयतु भवान्" इति।

सप्ताहः अतीतः। युवराजस्य व्यवहारे महत् परिवर्तनं जातम्। एतेन सन्तुष्टः सिंहसेनः दिव्यनाथम् उक्तवान्– "इतः परं भवान् मम आस्थाने एव तिष्ठतु" इति।

दिव्यनाथः सिंहसेनस्य वचनं सविनयं निराकुर्वन् उक्तवान्– "अहं देशे देशे सञ्चारं कुर्वन् भवतः कीर्तेः प्रचारं करिष्यामि। एतत् एव मम लक्ष्यम्" इति।

दिव्यनाथस्य वचनं श्रुत्वा अतीव सन्तुष्टः सिंहसेनः अमूल्यैः उपायनैः तं सत्कृतवान्।

अनन्तरं दिव्यनाथः ततः प्रस्थाय महासेनस्य आस्थानं गतवान्।

वेतालः एवं कथां समाप्य अवदत्– "हे राजन्! दिव्यनाथः कीर्तिसम्पादनं धनसम्पादनं च इच्छन् महाराजस्य महासेनस्य आस्थानं गतवान्। किन्तु महासेनः दिव्यनाथस्य पाण्डित्ये सन्देहं कुर्वन् तं सिंहसेनस्य समीपं प्रेषितवान्। दिव्यनाथः सिंहसेनस्य आस्थानं गत्वा तत्र स्वकीयां बुद्धिमत्तां चातुर्यं च प्रदर्शयन् अमूल्यानि उपायनानि सम्पादितवान्। तथापि सः सिंहसेनस्य आस्थानं त्यक्त्वा महासेनस्य आस्थानं किमर्थं गतवान्? तस्य स्वभावः विचित्रः किल! एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनम् स्थातुम् अशक्तः त्रिविक्रमः उक्तवान्– "दिव्यनाथस्य जीवनस्य लक्ष्यम् आशयश्च कीर्तिसम्पादनं, धनसम्पादनं च एव। किन्तु सिंहसेनस्य कलाभिमानः नास्ति, ज्ञानम् अपि नास्ति इति ज्ञात्वा सः तस्य आस्थाने स्वकीयं शास्त्रज्ञानं न प्रदर्शितवान्, अपि तु चातुर्यं लोकज्ञानादिकं च दर्शितवान्। 'भवान् एव अवतारपुरुषः' इति दिव्यनाथेन उक्ते वचने सुलभतया विश्वसितवान् सः सिंहसेनः। दिव्यनाथः तु बुद्धिमान्, ज्ञानी च। सिंहसेनस्य आस्थाने तादृशस्य पण्डितस्य स्थितिः न उचिता। अपि च दिव्यनाथः धनेन सह कीर्तिम् अपि इच्छति। एतस्मात् कारणात् एव सिंहसेनेन प्रार्थितः चेत् अपि दिव्यनाथः तत्र स्थातुं न अङ्गीकृतवान्" इति

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।





# चन्दमामानुबन्धः–५८



अस्मद्देशीया पशुपक्षिसम्पत्–

## रीससुजातीयाः कपयः

मनुष्याणां रक्तं द्विधा विभज्यते आर्.एच्.पासिटिव्, आर्.एच्. नेगेटिव् चेति। अत्र दृश्यमानम् आर्.एच्. इति अक्षरद्वयं रीससुनामिकां कपिजातिं द्योतयति। तन्नाम मानवानां कपीनां च रक्तसम्बन्धः अतिनिकटः।




कपिषु 'लाङ्गर्स्' 'मेकाक्स्' चेति द्वैविध्यं भवति। तत्र 'रीसस्मेकाक्' कपयः जगति एव ख्याताः। यतः एतेषां रक्तं मानवानां रक्तम् इव एव भवति। एतज्जातीयाः कपयः वैद्यकीय-परीक्षार्थं बहुधा उपयुज्यन्ते। पूर्वम् एतज्जातीयाः कपयः अस्मद्देशतः विदेशान् प्रति महता प्रमाणेन प्रेष्यन्ते स्म। तेन तज्जातीयानां कपीनां सङ्ख्यायां विशेषह्रासः जातः। सा च जातिः एव लुप्तप्राया जाता। अतः तस्याः जातेः समूलनाशं निवारयितुं सर्वकारेण नियमः कृतः यत् एतज्जातीयाः कपयः विदेशं प्रति न प्रेषणीयाः इति।

रीससुकपयः उत्तरभारते मध्यभारते च विशेषतः दृश्यन्ते। एतैः वर्षे षट् मासान् यावत् शैत्यं सोढव्यं भवति इत्यतः एतेषां शरीरं रोममयं भवति। एतज्जातीयस्य कपेः सामान्यम् औन्नत्यं प्रायः ६० सें.मी. भवति।

ग्रामेषु, नगरेषु, देवस्थानसमीपे, सरोवरपरिसरे, रेल्वेस्थानकसमीपे च एते कपयः समूहरूपेण निवसन्ति।




# राजा रविवर्मा

इदानीन्तनं केरलराज्यं यत् अस्ति तत् १९४७ तमवर्षतः पूर्वं तिरुवाङ्कूरु-कोच्चिन् इत्येतयोः संस्थानयोः अधीनम् आसीत्।

राजा रविवर्मा आधुनिके भारतीयचित्रकलारङ्गे श्रेष्ठं स्थानं प्राप्तवान् अस्ति। सः तिरुवाङ्कूरुराजवंशीयः। तिरुवाङ्कूरुप्रदेशस्य राजधानी तिरुवनन्तपुरम्। तिरुवनन्तपुरतः चत्वारिंशत् किलोमीटर् दूरे विद्यमाने कस्मिंश्चित् ग्रामे राजा रविवर्मा जन्म प्राप्तवान्।

रविवर्मा यदा एकवर्षीयः जातः तदा एव सः भित्तेः उपरि प्राणिनां चित्राणि, वृक्षाणां चित्राणि च लिखति स्म। यद्यपि ज्येष्ठाः तस्मात् कार्यात् तं निवारयन्ति स्म तथापि रविवर्मा सर्वदा किमपि चित्रं लिखति स्म। रविवर्मणः मातुलः राजवर्मा अपि चित्रकारः। राजवर्मा चित्रकलाविषये रविवर्मणः आसक्तिं दृष्ट्वा सन्तुष्टः सन् रविवर्माणं सर्वदा प्रोत्साहयति स्म। चित्रकलाम् अधिकम् अध्येतुम् इच्छन् रविवर्मा तिरुवनन्तपुरं गतवान्। तेषु दिनेषु तैलवर्णचित्राणां विशेषप्राधान्यम् आसीत्। तिरुवनन्तपुरे अळगिरिनायुडुनामकः चित्रकारः राजभवने उद्योगी आसीत्। ततः रविवर्मा तैलवर्णचित्राणां लेखनस्य अभ्यासं कृतवान्।



सुप्रसिद्धस्य 'डच्'चित्रकारस्य थियोडोर् जेनूसन् महोदयस्य प्रभावः रविवर्मणः उपरि अधिकतया अस्ति। जेनूसन् सकाशात् चित्रकलायाः अभ्यासं प्रत्यक्षं न कृतवान् चेत् अपि तस्य चित्रलेखनशैलीं दृष्टवान् आसीत् रविवर्मा। सा शैली अतीव अरोचत रविवर्मणे।

रविवर्मा अस्माकं पुराणानां रामायणमहाभारतादीनां च गभीरम् अध्ययनं कृत्वा तत्रत्यानि पात्राणि, सन्दर्भान् च पाश्चिमात्यया शैल्या चित्रितवान्। सर्वे अपि एतादृशैः चित्रैः आकृष्टाः।

१८८२ तमे वर्षे मदरास् गवर्नर् मदरास्नगरे एकं चित्रप्रदर्शनम् आयोजितवान् आसीत्। तस्मिन् चित्रप्रदर्शने रविवर्मणः चित्रेण सुवर्णपदकं लब्धम्। अनन्तरं 'वियन्ना'देशे यदा चित्रप्रदर्शनम् आयोजितम्, तदा तु रविवर्मणः कीर्तिः प्रपञ्चे एव व्याप्ता अभवत्। १९३५ तमे वर्षे रविवर्मा दिवङ्गतः। तदा सः महान् चित्रकारः इति अन्ताराष्ट्रियां कीर्तिं प्राप्तवान्।

विश्वकविः रवीन्द्रनाथठागोरः रविवर्मणः चित्राणां विषये एवम् उक्तवान्– ''बहोः कालात् रविवर्मणः चित्राणि पश्यन् अस्मि अहम्। मह्यं तस्य चित्राणि अतीव रोचन्ते। तानि चित्राणि पुराणादीनां पात्राणां रूपं, भावनाः, सन्दर्भान् च रमणीयतया निरूपयन्ति'' इति।



# भवन्तः जानन्ति वा?

१. महाराजस्य दशरथस्य पुत्री का? तां कः परिणीतवान्?
२. 'टेबल् टेन्निस्'क्रीडायाः संशोधनं कः कृतवान्? कदा?
३. भोपालनाम्नः भोजपालनाम्नः च कः सम्बन्धः?
४. भूमेः कियान् भागः जलेन आक्रान्तः अस्ति?
५. कश्चन ग्रन्थः 'तमिळवेदः' इति प्रख्यातः। सः ग्रन्थः कः? तस्य लेखकः च कः?
६. यथा 'रोम्'नगरं सप्तानां पर्वतानाम् उपरि निर्मितम्, तथैव दक्षिणभारते अपि एकं नगरं निर्मितम्। तस्य नगरस्य नाम किम्?
७. वज्राणि आम्ले द्रवीभूतानि न भवन्ति। तर्हि कुत्र द्रवीभूतानि भवन्ति?
८. अस्माकं देशे स्थितं तत् राज्यं किं, यस्य च नाम पर्वतवासिजातिं स्मारयति?
९. विक्रमादित्यस्य आस्थाने स्थिताः नव रत्नानि इति ख्याताः मेधाविनः के?
१०. चीनादेशस्य चक्रवर्तिनः आस्थानम् अलङ्कृतवान् युरोपीयः अधिकारी कः? तदानीन्तनः चक्रवर्ती च कः?
११. कस्य राज्यस्य नाम पूर्वं 'करुनाडु' इति आसीत्?
१२. विमानस्य आकारं प्रथमं कः संशोधितवान्?
१३. नायन्मार्जनानाम् आल्वार्जनानां च किं वैशिष्ट्यम्?
१४. आंग्लेयैः कलकत्तानगरे एकं दुर्गं निर्मितम्। तस्य नाम किम्? कदा निर्मितं च?
१५. चषके विद्यमानस्य हिमस्य द्रवीकरणं भवति चेत्, चषके जलस्य परिमाणम् अधिकं भवति किम्?

## उत्तराणि

१. युवाज्ञी शान्ता, ऋष्यशृङ्गनामकः मुनिः।
२. इङ्ग्लेण्ड्देशीयः जेम्स्गिब्, १८८८ तमे वर्षे।
३. मध्यप्रदेशस्य राजधानी भोपाल्, 'भोजपाल्' नामकस्य तटाकस्य कारणतः भोपाल् इति नामकरणं जातम्।
४. ७० प्रतिशतम्।
५. तिरुक्कुरळ्नामकः ग्रन्थः। तिरुवळ्ळुवर्।
६. तिरुवनन्तपुरम्। आदिशेषनामकस्य पर्वतस्य उपरि निर्मितम्।
७. उग्रे उष्णे।
८. मिजोराम्, 'मिजो' इत्युक्ते वनमानवः।
९. कालिदासः, बेतालभट्टः, घटकर्परः, वराहमिहिरः, क्षपणकः, अमरसिंहः, वररुचिः, शङ्कुः, धन्वन्तरी च।
१०. इटलिदेशीयः मार्कोपोलो, चक्रवर्ती कुब्लाखान्।
११. कर्णाटकस्य।
१२. प्रसिद्धः चित्रकारः लियोनार्डो डि विन्ची।
१३. नायन्मार्जनाः शिवभक्ताः, आल्वार्जनाः विष्णुभक्ताः।
१४. 'विलियम्' १६९६-१७१५ वर्षाणाम् मध्यभागे।
१५. न भवति।



# विवेकशाली

पूर्वं प्रतीहारनगरे त्रयः स्नेहिताः आसन्। तेषां नाम सूर्यकान्तः चन्द्रशेखरः चन्दनः च इति। बाल्यकालात् अपि तेषां मध्ये महती मैत्री। ते त्रयः अपि एकस्य एव गुरोः सकाशात् विद्याभ्यासं कृतवन्तः। तस्मात् कारणात् तेषां स्नेहः इतोऽपि गाढः जातः। तेषु चन्द्रशेखरः बुद्धिमान्। सः द्वयोरपि स्नेहितयोः अध्ययने साहाय्यं करोति स्म।

एवमेव कानिचन वर्षाणि अतीतानि। ते त्रयः अपि प्रौढाः जाताः। तेषाम् अध्ययनम् अपि समाप्तम्। इतोऽपि अधिकम् अध्येतव्यम् इति चन्द्रशेखरस्य इच्छा। सूर्यकान्तस्य चन्दनस्य अग्रिमे अध्ययने इच्छा नास्ति। चन्द्रशेखरः यद्यपि अधिकम् अध्येतुम् इच्छति, तथापि तस्य मातापित्रोः सः एकमात्रपुत्रः इति कारणतः तस्य उन्नतशिक्षणार्थं न प्रेषितवन्तः तस्य मातापितरौ।

एकस्मिन् सायङ्काले चन्द्रशेखरः मित्राभ्यां सह वायुविहारार्थं गच्छन् उक्तवान्– "अस्माकं भाविजीवनं सुखमयं भवतु इति कारणतः अहम् एकम् उपायं चिन्तितवान् अस्मि" इति।

"कः सः उपायः?" इति कुतूहलेन पृष्टवन्तौ अन्यौ द्वौ अपि।

तदा चन्द्रशेखरः उक्तवान्– "अवकाशस्य सदुपयोगं यः करोति सः एव बुद्धिमान्। वयं कूपमण्डूकाः न भवेम, अपि तु उत्तमानाम् अवकाशानां सदुपयोगं कुर्वन्तः उन्नतिं साधयेम इति मम आशयः" इति।

चन्द्रशेखरस्य वचनं श्रुत्वा सूर्यकान्तः चन्दनः च कुतूहलेन पृष्टवन्तौ– "तत् कथम्? किञ्चित् विस्तरेण वदतु" इति।

तदा चन्द्रशेखरः उक्तवान्– "अस्माकं



प्रतीहारनगरं परितः स्थितेषु ग्रामेषु प्रभूतं पूगं नारिकेलानि च वर्धयन्ति जनाः। अत्यावश्यकानां सुगन्धद्रव्याणाम् उत्पादनम् न भवति अस्मिन् नगरे। गण्डस-माल्यादि-द्वीपेभ्यः ये वणिजः अत्र आगच्छन्ति, ते अत्र अधिकमूल्येन सुगन्धद्रव्याणां विक्रयणं कुर्वन्ति। तेषां नगरेषु पूगफलस्य शुष्कनारिकेलानां च अधिकं मूल्यम् अस्ति इति श्रुतवान् अस्मि। अतः वयम् इतः पूगफलानि शुष्कनारिकेलानि च गण्डस-माल्यादि-द्वीपान् नीत्वा वाणिज्यं कुर्मः चेत् यथेष्टं धनसम्पादनं कर्तुं शक्नुमः" इति।

चन्द्रशेखरस्य वचनं श्रुत्वा तस्य स्नेहितौ सन्देहेन पृष्टवन्तौ– "वाणिज्यं कर्तुम् अस्माकं सामर्थ्यम् अस्ति वा?" इति।

तदा चन्द्रशेखरः उक्तवान्– "किमर्थं सामर्थ्यं नास्ति? आरम्भकाले किञ्चित् कष्टम् इति भासेत। यदा वाणिज्ये किञ्चित् अनुभवं प्राप्नुमः तदा निश्चयेन वयम् अभिवृद्धिं साधयितुम् समर्थाः भवेम एव" इति।

चन्द्रशेखरस्य धैर्यवचनानि श्रुत्वा सूर्यकान्तः चन्दनः च उत्साहेन अङ्गीकृतवन्तौ।

गृहं गत्वा चन्द्रशेखरः मातापितरौ स्वकीयम् आशयं निवेदितवान्। एकमात्रपुत्रः दूरं देशं गच्छति इति श्रवणमात्रेण एव तयोः दुःखं जातम्। मातापित्रोः अन्तरङ्गं ज्ञात्वा चन्द्रशेखरः उक्तवान्– "मम बाल्यस्नेहितौ सूर्यकान्तः चन्दनः चापि मया सह आगच्छतः। अतः भयं मास्तु भवतोः" इति।

पुत्रस्य वचनं मातापितरौ अङ्गीकृतवन्तौ।

अनन्तरदिने ते त्रयः अपि स्नेहिताः वस्तूनि स्वीकृत्य वाणिज्यार्थं प्रस्थितवन्तः। प्रथमं गण्डसद्वीपं गतवन्तः। तत्र एकस्मिन् वसतिगृहे वासं कृतवन्तः च।

तस्यां रात्रौ चन्द्रशेखरः स्नेहितौ उद्दिश्य उक्तवान्– "श्वः एव वयं नगरस्य एकैकं प्रदेशं गत्वा अस्माकं कार्यस्य शुभारम्भं कुर्मः" इति।

सूर्यकान्तः चन्दनः च विमनस्कौ एव

मित्रस्य वचनम् अङ्गीकृतवन्तौ।

अनन्तरदिने प्रातः त्रयः अपि वाणिज्यार्थं प्रस्थिताः। सायङ्काले वसतिगृहं प्रत्यागतवन्तः च। किन्तु सूर्यकान्तस्य चन्दनस्य च मुखे म्लानता दृश्यते। खिन्नौ तौ दृष्ट्वा चन्द्रशेखरः पृष्टवान्– "किमर्थं भवतोः मुखं म्लानम् अस्ति? किं प्रवृत्तम्?" इति।

तदा सूर्यकान्तः चन्दनः च एकस्वरेण उक्तवन्तौ– "आवां वाणिज्यव्यवहारं न जानीवः। आवयोः अद्य वाणिज्ये महती हानिः जाता। केचन आवां दृष्ट्वा 'भवन्तौ नूतनतया वाणिज्यकार्यम् आरब्धवन्तौ वा' इति पृच्छन्तः उपहसितवन्तः" इति।

अनन्तरं तौ द्वौ अपि चन्द्रशेखरं पृष्टवन्तौ– "भवतः अद्यतनः अनुभवः कः?" इति।

तदा चन्द्रशेखरः उक्तवान्– "मम निरीक्षायाः अपेक्षया अपि अधिकः एव लाभः जातः। सिंहळदेशतः काश्मीरदेशतः च ये वणिजः आगतवन्तः तेषां परिचयः अपि अभवत्। ते वणिजः श्वः मां भोजनार्थम् आहूतवन्तः सन्ति" इति।

चन्द्रशेखरस्य अनुभवं श्रुतवतोः सूर्यकान्तस्य चन्दनस्य च मुखं म्लानं जातम्।

पञ्चषाणि दिनानि अतीतानि। तावति काले एव चन्द्रशेखरेण आनीतानि वस्तूनि सर्वाणि समाप्तानि अभवन्। किन्तु



सूर्यकान्तस्य चन्दनस्य च वस्तूनाम् अर्धांशोऽपि न विक्रीतः। तदा चन्द्रशेखरः एव तयोः द्वयोरपि वस्तूनां लाभः यथा स्यात् तथा विक्रयणं कारयित्वा दत्तवान्। अनन्तरं ते त्रयः अपि सुगन्धद्रव्याणि, गृहालङ्कारवस्तूनि विदेशिवस्तूनि च क्रीतवन्तः।

अनन्तरं त्रयः अपि उपविश्य चिन्तितवन्तः– 'आनीतानि वस्तूनि समाप्तानि। अतः पुनः प्रतीहारनगरं प्रति गमनम्। स्वनगरं प्रति गमनात् पूर्वं गण्डसद्वीपे यः प्रसिद्धः केशवदेवालयः अस्ति, तं देवालयं दृष्ट्वा गच्छाम' इति।

अनन्तरदिने प्रातः एव ते केशवदेवालयं



गतवन्तः। उन्नते पर्वते केशवदेवालयः अस्ति। देवालयस्य पृष्ठभागे गण्डकीनदी प्रवहति। पर्वतस्य अञ्चले सुन्दरं उद्यानम् अस्ति। सूर्यकान्तः चन्दनः च उद्यानदर्शनस्य व्याजेन चन्द्रशेखरं तत्र नीत्वा वञ्चनया गण्डकीनद्यां पातितवन्तौ। ततः वेगेन धावन्तौ वसतिगृहं प्राप्तवन्तौ।

वसतिगृहे चन्द्रशेखरस्य यानि धन-कनकादिवस्तूनि आसन्, तत्र अर्धार्धं स्वीकृत्य ततः प्रतीहारनगरं गतवन्तौ सूर्यकान्तः चन्दनः च।

प्रतीहारनगरे चन्द्रशेखरस्य मातापितरौ पुत्रम् एव प्रतीक्षमाणौ आस्ताम्। सूर्यकान्तः चन्दनः च चन्द्रशेखरस्य गृहं गत्वा– "भवतोः पुत्रः चन्द्रशेखरः वाणिज्ये महतीं हानिं प्राप्य, तत् अपमाननं सोढुम् अशक्तः आत्महत्यां कृतवान्। अनन्तरं तस्य देशस्य न्यायपद्धत्यनुगुणं तदीयानि वस्तूनि तत्रत्याः अधिकारिणः स्वायत्तीकृतवन्तः" इति वदन्तौ महत् दुःखं प्रकटीकृतवन्तौ। एतत् सत्यम् इत्येव विश्वसितवन्तौ चन्द्रशेखरस्य मातापितरौ।

किन्तु वस्तुस्थितिः अन्या एव। चन्द्रशेखरस्य स्नेहितौ तं यदा नद्यां पातितवन्तौ तदा दैववशात् सः पर्वतस्य अधोभागे विद्यमानस्य वटवृक्षस्य उपरि पतितवान्। उपरिष्टात् अधः पतनेन मूर्च्छां गतः चन्द्रशेखरः सायङ्कालसमये ज्ञानं प्राप्तवान्।

सः जागरणस्य अनुक्षणं– "रक्षन्तु, रक्षन्तु" इति क्रन्दनं कृतवान्।

तस्मिन् समये तत्रैव समीपे उद्याने स्वर्णगौरी नाम महिला सखीभिः सह विहरन्ती आसीत्। स्वर्णगौरी केशव-देवालयस्य कार्यकर्तृषु अन्यतमस्य मन्दारकस्य एकमात्रपुत्री। चन्द्रशेखरस्य क्रन्दनं श्रुत्वा सा अनुक्षणं कर्मकरान् आहूय तेषां साहाय्येन रज्जुद्वारा तम् उपरि आनायितवती।

उपरि आगमनानन्तरं चन्द्रशेखरः पुनः मूर्च्छां गतः। तदा स्वर्णगौरी कर्मकराणां साहाय्येन तं स्वगृहं नीत्वा तस्य औषधोपचारं

कृतवती।

मूर्च्छितं चन्द्रशेखरं दृष्ट्वा चकितः स्वर्णगौर्याः पिता पुत्रीम् उक्तवान्– "वत्से, एषः प्रतीहारनगरतः वाणिज्यार्थम् अस्माकं प्रदेशम् आगतः। एतस्य नाम चन्द्रशेखरः। अहम् एतस्य सकाशात् कानिचन वस्तूनि क्रीतवान्। एतस्य वाणिज्यनिष्ठया चातुर्येण च सन्तुष्टः अहम् कानिचन उपायनानि एतस्मै दत्तवान् अस्मि" इति।



किञ्चित्कालानन्तरं चेतनतां प्राप्तवान् चन्द्रशेखरः। सः पार्श्वे स्थितं गण्डसद्वीपस्य प्रमुखं वणिजं मन्दारकं दृष्ट्वा चकितः।

सचेतनं चन्द्रशेखरं वात्सल्येन पश्यन् मन्दारकः पृष्टवान्– "भोः, किं प्रवृत्तम्? कथं भवान् पर्वतस्य अधः पतितः?" इति।

तदा चन्द्रशेखरः प्रवृत्तं सर्वं मन्दारकं निवेदितवान्।

चन्द्रशेखरस्य वचनं श्रुत्वा कोपाविष्टः मन्दारकः उक्तवान्– "अयं महान् मित्रद्रोहः। सूर्यकान्तः चन्दनः च इदानीं नगरे एव स्याताम्। इदानीम् एव अहं राजभटैः सह गत्वा तौ बद्ध्वा आनेष्यामि" इति।

तदा चन्द्रशेखरः शान्तस्वरेण उक्तवान्– "यद्यपि तयोः बन्धनं सुलभतया कर्तुं शक्येत, तथापि तथा बन्धनं कर्तुं मम मनः न अङ्गीकरोति। अन्यच्च मम मारणार्थम् एतादृशम् उपायं चिन्तितवन्तौ तौ मदीयं धनकनकादिकं स्वीकृत्य एतावति काले नगरं त्यक्त्वा गतवन्तौ स्याताम् अपि" इति।

चन्द्रशेखरस्य अभिप्रायेण चकितः मन्दारकः पृष्टवान्– "इतःपरम् अपि भवान् ताभ्यां सह मित्रत्वेन व्यवहर्तुम् इच्छति वा?" इति।

तदा चन्द्रशेखरः मन्दहासपूर्वकम् उक्तवान्– "मित्रत्वेन व्यवहर्तव्यम् इति नास्ति इच्छा। तयोः द्रोहकार्येण मम मनः खिद्यते। किन्तु इदानीं तौ गृहीत्वा निन्दारोपणं क्रियते, चेत तेन न किमपि प्रयोजनम्। अहं न केवलं ज्ञानी, अपि तु विवेकी इति मम आशयः। अतः तयोः क्षमाम् अकृत्वा मम चातुर्येण प्रतीकारं साधयिष्यामि। यदि मम विषये भवतः



मन्दारकस्य वचनेन चन्द्रशेखरः किञ्चित् अपि न दुःखितः। सः मौनं स्थितवान्।

तदा मन्दहासपूर्वकं मन्दारकः– "मम पुत्र्याः आशयः यत् भवान् मम जामाता भवेत्। अनन्तरं मया भवते यथेष्टं धनं दातव्यम् इति। मम तु पुत्रः नास्ति। यदि भवादृशः बुद्धिमान् विवेकी च जामाता भवति तर्हि मम सौभाग्यम् इति चिन्तयामि। एतद्विषये भवतः अभिप्रायः कः?" इति पृष्टवान्।

तदा चन्द्रशेखरः उक्तवान्– "मम अभिप्रायस्य अपेक्षया भवतः, भवत्पुत्र्याः च अभिप्रायः अस्मिन् विषये प्रधानम् इति चिन्तयामि। यतः मम मातापितरौ, सर्वे बान्धवाश्च प्रतीहारनगरे सन्ति। अपि च अहं मम जन्मभूमौ एव वासं कर्तुम् इच्छामि। अतः अत्रैव स्थित्वा वाणिज्यकरणं मह्यं न रोचते" इति।

चन्द्रशेखरस्य स्वाभिमानेन सन्तुष्टः मन्दारकः उक्तवान्– "भवतः स्वाभिमानेन धैर्येण च सन्तुष्टा मम पुत्री भवन्तम् परिणेतुम् इष्टवती। अतः भवतः इच्छानुसारम् एव भवतु। भवदर्थं वयम् एव भवतः देशम् आगमिष्यामः" इति।

केषुचित् दिनेषु एव स्वर्णगौरी-चन्द्रशेखरयोः विवाहः सवैभवं सम्पन्नः।

अनन्तरम् एकस्मिन् शुभदिने सपत्नीकः चन्द्रशेखरः श्वशुरेण सह प्रतीहारनगरं

अभिमानः अस्ति, तर्हि किञ्चित् धनं ऋणरूपेण ददातु। तदेव मूलधनरूपेण स्थापयित्वा तेन पुनः वाणिज्यं कृत्वा भवतः ऋणं वृद्धिसहितं प्रत्यर्पयिष्यामि" इति।

एतत् श्रुत्वा अङ्गीकारपूर्वकं शिरः चालयन् मन्दारकः किमपि वक्तुम् उद्युक्तः। तावति काले स्वर्णगौरी– "तात! एकक्षणं मया सह आगच्छतु" इति वदन्ती पितरं पार्श्वप्रकोष्ठं नीतवती।

किञ्चित्समयानन्तरं मन्दारकः एकः एव प्रकोष्ठात् बहिः आगत्य उक्तवान्– "वत्स, भवते एकं नाणकम् अपि ऋणरूपेण न दातव्यम् इति मम पुत्री साग्रहं वदन्ती अस्ति" इति।

गतवान्।

अकस्मात् आगतं पुत्रं दृष्ट्वा चन्द्रशेखरस्य मातापितरौ अतीव सन्तुष्टौ। किन्तु सूर्यकान्तस्य चन्दनस्य च हृदये कम्पनम् आरब्धम्। चन्द्रशेखरं दृष्ट्वा चकिताः तस्य परिचिताः सर्वे अपि चन्द्रशेखरस्य इतिवृत्तं श्रोतुम् इच्छन्तः अनेकान् प्रश्नान् पृष्टवन्तः।

तदा चन्द्रशेखरः सर्वान् उद्दिश्य उत्तरं दत्तवान्– "केचन असूयया मां मारयितुम् उद्युक्ताः। किन्तु भगवतः अनुग्रहेण अहं रक्षितः। इतोऽपि अधिकं विवरणं दातुं न इच्छामि। कृपया क्षम्यताम्" इति।

चन्द्रशेखरस्य वचनेन जनाः– "चन्द्रशेखरः सूर्यकान्तस्य चन्दनस्य च अपेक्षया बुद्धिमान्। सः वाणिज्ये लाभं प्राप्तवान् स्यात्। तस्मात् कारणात् असूयया अपरौ द्वौ अपि चन्द्रशेखरम् मारयितुम् प्रयत्नं कृतवन्तौ स्याताम्। अतः स्वनगरम् प्रति आगतं चन्द्रशेखरं दृष्ट्वा अपि सूर्यकान्त-चन्दनयोः सन्तोषः न जातः। चन्द्रशेखरः अपि ताभ्यां सह सम्भाषणं न कृतवान्" इति वक्तुम् आरब्धवन्तः।

जनानाम् एतादृशसम्भाषणं श्रुत्वा सूर्यकान्तचन्दनौ किंकर्तव्यतामूढौ जातौ।

एतत्सर्वम् अवलोकयन् मन्दारकः चन्द्रशेखरं पृष्टवान्– "चन्द्रशेखर, मित्रयोः विषये भवता चिन्तितः प्रतीकारः साधितः वा?" इति।

तदा चन्द्रशेखरः उक्तवान्– "मम एकेन एव वचनेन मम मित्रयोः दुष्कार्यं कीदृशं स्यात् इति जनाः ज्ञातवन्तः। एतेन प्रतीकारं साधितम् इव जातम् खलु" इति।

चन्द्रशेखरस्य वचनेन सन्तुष्टः मन्दारकः उक्तवान्– "सत्यम्। ज्ञानी यथा द्रोहिणः अपि क्षाम्यति तथा भवान् तौ मित्रद्रोहिणौ न क्षान्तवान्, किन्तु चातुर्येण प्रतीकारं साधितवान्। विना परिश्रमम् एतत् कार्यं साधितवान् भवान्। अतः अहं भवन्तम् अभिनन्दामि" इति।



# र स वा र्ता:

## सुदीर्घं दिनम्

१९९३ तमवर्षस्य जून् ३० दिनाङ्क:। मध्यरात्रसमय:। सर्वेषां गभीरनिद्रा। तस्मिन् समये देहलीनगरे राष्ट्रियप्रयोगालये विज्ञानिन: जागरिता: आसन्। तस्मिन् प्रयोगालये 'अटामिक् क्लाक्' इति एका घटी अस्ति। तस्यां घट्यां एकं सेकेण्ड् समीकर्तुं ते विज्ञानिन: निद्रां त्यक्त्वा उपविष्टवन्त: आसन्। तेषां गणनानुसारं तस्मिन् दिने भूभ्रमणे एकं सेकेण्ड् न्यूनं



भवति। यदि तदा एव घट्यां समयस्य सम्यक् समञ्जनं न क्रियते, तर्हि अनन्तरदिने 'अटामिक् घट्या:' समयस्य अन्यासां घटीनां समयस्य च भेद: भविष्यति। एकादशवर्षेभ्य: पूर्वम् अपि एतादृशी एव घटना प्रवृत्ता। १९७२ वर्षस्य जून् ३० दिनाङ्के एकं सेकेण्ड् अधिकं जातम्। घट्यां समयस्य समीकरणसमये वयम् एतत् सर्वं न गणयाम: किल!

## भूमि: रक्षिता

सामान्यत: ६००० टन्भारयुक्त: नक्षत्राकारक: कश्चन लघुग्रह: मे मासस्य २० दिनाङ्के ४८००० मैल् वेगेन भूमे: दिशि आगतवान्। भूमे: तस्य ग्रहस्य च ९०,००० मैल् अन्तरं यदा आसीत् तदा स: ग्रह: मार्गान्तरेण गतवान्। सौभाग्यवशात् तस्य ग्रहस्य आक्रमणत: भूमि: रक्षिता। 'यदि स: ग्रह:



मार्गपरिवर्तनं न कृतवान् स्यात्, तर्हि महती हानि: अभविष्यत्' इति अमेरिकादेशस्य अन्तरिक्ष-परिशोधनसंस्थाया: द्वौ विज्ञानिनौ उक्तवन्तौ। अन्तरिक्षे ग्रहाणां यत् चलनं भवति तस्य परिशीलनम् एव तयो: विज्ञानिनो: कार्यम्।

## अन्तरिक्षे नूतन: विजय:

अमेरिकात: 'एण्डम्'नामिका काचन विलक्षणा बाह्याकाशनौका जून् २१ दिनाङ्के अन्तरिक्षं प्रति प्रेषिता। सा षट्पञ्चाशत्तमी अन्तरिक्षनौका। तस्यां नौकायां षट् व्योमयात्रिण: आसन्। तेषु चत्वार: प्रस्थानानन्तरं पञ्चमे दिने अन्तरिक्षे पदं स्थापयन्त:, षट्मासेभ्य: पूर्वं अन्तरिक्षं प्रापितं 'युरेका'नामकं युरोपियन्—संशोधनोपग्रहम् अन्विष्य 'एण्डम्'-नामिकया बाह्याकाशनौकया योजितवन्त:। अन्तरिक्षस्थ: युरेकानामक: उपग्रह: षड्भ्य: मासेभ्य: विविधसंशोधनानां फलितांशं सङ्गृह्य भूमिकेन्द्रं प्रति प्रेषयन् अस्ति।




अयोध्यायां श्रीरामस्य पट्टाभिषेकः महता वैभवेन सम्पन्नः। अनन्तरं रामः स्वयं शासननिर्वहणकार्ये उद्युक्तः जातः। 'प्रजोपयोगीनि बहूनि कार्याणि करणीयानि' इति सङ्कल्प्य कदाचित् सः मन्त्रिणं सुमन्त्रम् आहूय स्वस्य अपेक्षां निवेद्य– "एतदर्थं प्रभूतं धनम् आवश्यकम्। इदानीं कोषागारे कियत् धनं स्यात्?" इति पृष्टवान्।

"प्रभो, धनागारं रिक्तप्रायम् अस्ति। यतः गतेषु चतुर्दशसु बर्षेषु जनाः करं न दत्तवन्तः एव" इति निवेदितवान् सुमन्त्रः।

"एवं तर्हि काले काले वृष्टिः न आगता स्यात्। प्रजाः सर्वाः क्षामादिभिः नितरां पीडिताः स्युः। एवं ननु?" इति मन्त्रिणं पृष्टवान् श्रीरामः।

सुमन्त्रः क्षणकालं मौनं स्थितवान्। 'वस्तुस्थितिः वक्तव्या वा न वा' इति किञ्चित्कालं चिन्तितवान् सः।

अनन्तरं शिरः अवनमय्य सः उक्तवान्– "प्रभो, देशे क्षामादिकं न आसीत् एव। देशः सस्यश्यामलः अस्ति। धनिकाः बणिजः करं न दत्तवन्तः। कृषिकाः अपि करं न दत्तवन्तः। अन्ये धनिकाः अपि न दत्तवन्तः। करस्य अनागमनतः कोषागारं न पूर्णम् इत्यत्र किम् आश्चर्यम्?" इति।

"किमर्थम् एवं जातम्? भरतः किं करोति स्म?" इति लघुकोपमिश्रितेन स्वरेण पृष्टवान् रामः।

"प्रभो! भरतार्येण राज्यपालनविषये कदापि चिन्तनं न कृतम् एव। भवतः पादके

३९. रामराज्ये हनूमतः कृत्यानि।



पूजयन् सः दिनानि यापयति स्म। भरतार्यस्य सरलतायाः दुरुपयोगः स्वीकृतः बहुभिः। ते भरतस्य पुरतः भवन्नामसङ्कीर्तनं कृत्वा उपायनम् अपि प्राप्तवन्तः। यदा अस्माभिः करसङ्ग्रहविषयः स्मारितः तदा भरतार्येण उक्तम्— 'ये करं न दत्तवन्तः तान् मा पीडयन्तु भवन्तः। ते सर्वे मम अग्रजस्य भक्ताः। रामभक्तानां पीडनम् अहं सर्वथा न सहे' इति। अतः प्रभोः आज्ञायाः उल्लङ्घनं कर्तुम् अशक्नुवन्तः वयम् अपि मौनं स्थितवन्तः'' इति वस्तुस्थितिं निवेदितवान् सुमन्त्रः।

वस्तुस्थितिः सम्यक् अवगता रामेण। 'एवं तर्हि इतः परं राज्यभारनिर्वहणं कथम्?' इति यावत् रामः चिन्तयन् आसीत् तावता लक्ष्मणः तत्र आगतः। सुमन्त्रः कोषागारस्य रिक्ततां रामस्य चिन्तां च लक्ष्मणं विस्तरेण निवेदितवान्।

लक्ष्मणः क्षणकालम् आलोच्य— ''एवं तर्हि एतद्विषये एवं कर्तुं शक्यते— यैः अद्यावधि करः न दत्तः ते कूष्माण्डमितं सुवर्णम् अर्पयेयुः इति वार्ता समग्रे राज्ये सडिण्डिमघोषं प्रसारणीया। एतस्मात् क्रमात् कस्यापि अन्याय्यं यथा न भवेत् तथा व्यवस्थां तु अहं करिष्यामि'' इति।

रामः एतं प्रस्तावम् अङ्गीकृतवान्। तस्मिन् एव दिने समग्रे राज्ये वार्ता सडिण्डिमघोषं प्रसारिता। लक्ष्मणः जानाति स्म यत् यैः चतुर्दश वर्षाणि यावत् करः न दत्तः ते कूष्माण्डमितं किं, भाण्डमितं सुवर्णं दातुम् अपि मनसा सिद्धाः सन्ति इति। तथापि वस्तुस्थितिं प्रत्यक्षं ज्ञातुम् इच्छन् सः हनूमन्तम् आहूय उक्तवान्— ''भवान् जनानां मध्ये रहसि सञ्चरन् राजाज्ञाविषये जनाः किं वदन्तः सन्ति इति ज्ञात्वा आगच्छतु'' इति।

हनूमान् सूक्ष्मरूपं धृत्वा प्रजानां मध्ये सञ्चरन् तासां वार्तालापं श्रुतवान्। अनन्तरं प्रतिगत्य लक्ष्मणम् उक्तवान्— ''कूष्माण्डपरिमितस्य सुवर्णस्य दाने कस्यापि विमतिः नास्ति। जनाः वदन्ति यत् भरतः इव रामः अपि अतिसरलः जनः इति। वस्तुतः तु

चतुर्दश वर्षाणि यावत् करः न दत्तः इत्यतः भाण्डमितं सुवर्णं दातव्यम्। किन्तु प्रभुः रामः कूष्माण्डमितसुवर्णमात्रम् अस्मत्तः इच्छति इति ते वदन्तः सन्ति'' इति।

एतत् श्रुत्वा लक्ष्मणः चिन्तितवान्– 'प्रजासु सर्वे धनिकाः न स्युः। अतः केचन कूष्माण्डमितं सुवर्णं दातुं कदाचित् न शक्नुयुः। तादृशाः यथा पीडिताः न भवेयुः तथा व्यवस्था करणीया' इति।

एतद्विषये सः हनूमता सह समालोचनं कृतवान्। अनन्तरं तौ कञ्चित् उपायं निश्चित्य अयोध्यायाम् एव स्थितं धर्मदेवतायाः आलयं गतवन्तौ। धर्मदेवतां सर्वं निवेद्य तस्याः साहाय्यं प्रार्थितवन्तौ। धर्मदेवता तयोः प्रार्थनाम् अङ्गीकृतवती। ततः अग्रे किं करणीयम् इति निश्चित्य तौ ततः निर्गतवन्तौ। तावता सूर्यास्तः जातः आसीत्।

अनन्तरदिने सूर्योदयसमये राजभवनस्य अङ्गणे महती तुला स्थापिता। तुलायाः एकस्मिन् भागे एकं कूष्माण्डं स्थापितम्। जनाः सुवर्णग्रन्थिं गृहीत्वा एकैकशः तत्र आगताः।

तेषु प्रथमः आत्मना आनीतं सुवर्णं तुलायाः अपरभागे स्थापितवान्। किन्तु तेन तुलायाः कूष्माण्डयुक्तः भागः उपरि न आगतः। सः जनः आश्चर्यम् अनुभवन् गृहं गत्वा प्रभूतं सुवर्णम् आनीतवान्। सर्वं तुलायां




स्थापितवान्। तदा तुलायाः भागद्वयम् अपि समानतया स्थितम्।

एतत् दृष्ट्वा अन्ये सर्वे अपि गृहं गत्वा पुनरपि सुवर्णम् आनीतवन्तः। पङ्क्तिशः आगत्य सुवर्णं समर्पितवन्तः।

एतत्सर्वं दृष्ट्वा कश्चन दरिद्रः कृषिकः भीतिम् अनुभवन् एव आत्मना आनीतम् अल्पं सुवर्णं तुलायां स्थापितवान्। किन्तु आश्चर्यं नाम तावता एव तत् सुवर्णं कूष्माण्डसमभारतां प्राप्नोत्।

एवं तुला न्यायमार्गानुयायिनां सज्जनानां निर्धनानां च विषये एकविधं व्यवहारं करोति चेत् धनिकानां कपटिनां च विषये अन्यविधम् एव व्यवहारं करोति स्म। अल्पे एव काले



जनैः अवगतं यत् एषा विशिष्टा तुला तत्तस्य योग्यतायाः अनुगुणं व्यवहरति इति। अतः ते प्रामाणिकबुद्ध्या यावत् वास्तविकतया दातव्यं तावत् आनीय तुलायां स्थापितवन्तः। एवं सर्वेभ्यः करः सङ्गृहीतः। धनागारं पूर्णं जातम्।

अङ्गणे करसमर्पणस्थले प्रवृत्तं सर्वं स्वयं दृष्ट्वा रामः आश्चर्यचकितः। आतङ्कं प्राप्तवान् सः लक्ष्मणं, मन्त्रिणं सुमन्त्रं च मन्त्रालोचनमन्दिरं प्रति नीतवान्। सूक्ष्मरूपेण तान् अनुसरन् हनूमान् अपि मन्त्रालोचनमन्दिरं प्रविष्टवान्।

"लक्ष्मण! कूष्माण्डस्य भारः कियान् भवेत्? कदाचित् महाभारमितता अपि दृश्यते स्म खलु? अन्यच्च कूष्माण्डम् एकैकस्य विषये एकैकं भारं प्रदर्शयति स्म। कथम् एतत्? अत्याशया भवद्भिः प्रजाः वञ्चिताः वा? कः एषः व्यवहारः भवताम्?" इति कोपमिश्रितेन स्वरेण पृष्टवान् राजा श्रीरामः।

तदा लक्ष्मणः विनयेन निवेदितवान्– "अस्माभिः काऽपि वञ्चना न कृता। धर्मदेवतायाः सूचनायाः अनुगुणं व्यवहृतम्। कः योग्यं करं दत्तवान्, कः वञ्चनां कृतवान् इत्यादिकं धर्मदेवता जानाति स्म। अतः यदा कश्चित् तुलासमीपम् आगच्छति तदा धर्मदेवता तेन कियत् सुवर्णं दातव्यम् इति निर्णयति स्म। हनूमान् तुलायाः उपरि सूचिकायाः पार्श्वे सूक्ष्मरूपेण उपविष्टवान् आसीत्। धर्मदेवतायाः सूचनायाः अनुगुणं सः सूचीं वामतः दक्षिणतः वा नुदति स्म। धर्मदेवतायाः वचनं हनूमान् केवलं श्रोतुं शक्नोति स्म, नान्ये। आरम्भे केचन करदाने वञ्चनां कर्तुं प्रयत्नं कृतवन्तः। किन्तु तुला तत्तद्योग्यतानुगुणं सुवर्णम् इच्छति इति यदा ज्ञातं तदा सर्वे वास्तविकतया यावत् दातव्यं तावत् एव आनीय अर्पितवन्तः। अतः सर्वं सम्यक् जातम्। धर्मदेवतायाः मार्गदर्शनं, हनूमतः साहाय्यं च अत्र अपूर्वम् आसीत्" इति उक्तवान् लक्ष्मणः।

यावत् रामः किमपि वक्तुम् उद्युक्तः तावता धर्मदेवतायाः वाणी श्रुता–

'धर्मैकपक्षपातिन्! राम! लक्ष्मणः यत् वदति तत् सत्यम् एव' इति। तदा हनूमान् सूक्ष्मरूपं परित्यज्य वास्तविकरूपेण रामस्य पुरतः आगत्य रामं साष्टाङ्गं नमस्कृतवान्। रामः हनूमतः कृत्यं श्लाघितवान्।

इतः केषाञ्चित् दिनानाम् अनन्तरं रामः निश्चितवान् यत् कोसलवासिनां सर्वेषां निमित्तं विशेषभोजनकार्यक्रमः व्यवस्थापनीयः इति। एतदर्थम् अपेक्षितानां वस्तूनाम् आनयने, विशालस्य वितानस्य निर्माणे, इतरकार्येषु च हनूमान् एव नायकत्वं निरूढवान्। एतदर्थम् अहोरात्रं कार्यं करोति स्म सः।

हनूमतः परिश्रमं सीता लक्षितवती। पुत्रे इव हनूमति वात्सल्यं सीतायाः। यतः लङ्कायां तस्याः स्थितिं ज्ञात्वा आगतवान् हनूमान् एव खलु?

अतः सीता हनूमन्तं समीपम् आहूय उक्तवती– "आञ्जनेय! भवान् अहोरात्रं कार्यं कुर्वन् अस्ति। भोजनसमयः इदानीम् आसन्नः अस्ति। अतिथीनां सत्कारे कोऽपि लोपः यथा न भवेत् तथा भवता एव द्रष्टव्यं खलु? अतः प्रथमं भवान् भोजनं करोति चेत् वरम्" इति।

एतत् वचनम् अङ्गीकुर्वन् हनूमान् सीताम् अनुसरन् पाकशालां गतवान्। सीता पत्रं प्रसार्य स्वयं परिवेषणम् आरब्धवती। सा यद्यत् परिवेषयति तत्सर्वं खादति हनूमान्।



एवं किञ्चित्कालं प्रवृत्तम्। सीता यावत् आनीय परिवेषयति तावदपि खादति हनूमान्। सहस्राधिकजनानां निमित्तं सज्जीकृतानि अन्नपायसादीनि सर्वाणि आनीय परिवेषितवती सीता। तथापि हनूमान् तु न तृप्तः। एतत्सर्वं दृष्ट्वा आश्चर्यम् अनुभवन्ती सीता धावन्ती रामसमीपं गत्वा प्रवृत्तं सर्वं निवेदितवती।

तदा रामः हसन्– "हनूमान् कः इति न जानाति वा भवती? परशिवस्य अंशात् जातः सः। अतः सः तृप्तः यथा भवेत् तथा भवत्या एव कोऽपि उपायः चिन्तनीयः। अत्र अहं किमपि कर्तुं न शक्नोमि" इति सीतादेवीम् उक्तवान्।



सीता पाकशालां प्रत्यागत्य हनूमतः पृष्ठतः स्थित्वा– "परमेश्वर! भवान् कः इति इदानीं ज्ञातं मया। एतावतः अनन्तरम् अपि भवान् तृप्तिं न प्राप्नोति चेत् अस्माकं गौरवं धूलिसात् भविष्यति" इति उक्त्वा पञ्चाक्षरीमन्त्रं त्रिवारं जपितवती।

अनन्तरक्षणे एव तृप्तस्य हनूमतः मुखात् उद्गिरणस्वरः निर्गतः। सीता तस्य पुरतः स्थित्वा पृष्टवती– "किं वत्स! पुनः किञ्चित् परिवेषयामि वा?" इति।

"मास्तु अम्ब! उदरं पूर्णम्। तृप्तः अहम्" इति उक्त्वा हनूमान् पाकशालातः निर्गतवान्।

अनन्तरं सीता अन्नपूर्णादेव्याः ध्यानं कृतवती। सन्तुष्टा अन्नपूर्णादेवी रिक्तानि पात्राणि विविधैः पाकपदार्थैः पूरितवती। पौराणां वानराणां च निमित्तं भोजनं परिविष्टम्। सर्वे पङ्क्तिशः उपविश्य भोजनम् आरब्धवन्तः।

वानराणां पङ्क्तेः अन्ते उपविष्टः कश्चन लघुवानरः आमलकनिर्मितम् अवलेहम् आश्चर्येण दृष्टवान्। अनन्तरं अङ्गुल्या एकस्य आमलकस्य नोदनं कृतवान्। तदा तस्य अन्तः स्थितं गोलाकारकं बीजम् उपरि उद्गतम्।

तदा लघुवानरः तत् बीजं पश्यन्– "अये, यथा भवान् तथा अहम् अपि उत्प्लवनं जानामि। पश्यतु तावत् मम सामर्थ्यम् अपि" इति उक्त्वा उत्प्लवनं कृतवान्। एतं दृष्ट्वा पार्श्वस्थः अपरः वानरः अपि उत्प्लवनं कृतवान्। तदा तत्पार्श्वस्थः अपि तथैव कृतवान्।

एवं वानराः स्पर्धाभावेन एकैकशः उत्प्लवनं कृतवन्तः। अङ्गदः, नीलः, सुग्रीवश्चापि उत्प्लवनं कृतवन्तः। रामस्य आज्ञा एवं स्यात् इति चिन्तयन् हनूमान् अपि किञ्चित् उत्प्लुत्य उपविष्टवान्।

वानराणाम् एतादृशीं प्रवृत्तिं दृष्ट्वा रामः तत्र आगत्य हनूमन्तं पृष्टवान्– "सर्वे उपर्युपरि उत्प्लवनं कृतवन्तः। किन्तु भवान् किञ्चित् एव उत्प्लवनं कृतवान्। किमर्थम् एवम्?" इति।

"प्रभो! एते सर्वे वानराः महावीराः वीराधिवीराः वा। अहं तु अल्पः" इति विनयेन उक्तवान् हनूमान्।

तदा जाम्बवान् तत्र आगत्य उक्तवान्— "अन्येन ज्ञापितं चेदेव हनूमता स्वशक्तिसामर्थ्यादिकं स्मर्यते, नान्यथा" इति।

रामः एकं श्वेतकमलं हनूमते दत्त्वा— "अस्माकं वंशस्य मूलपुरुषः सूर्यः। वयं सर्वे सूर्यवंशीयाः। सूर्यदेवः श्वेतपद्मधरः इति ख्यातः अस्ति। तस्मै एतत् श्वेतकमलं दातव्यम्। तथा दातुं समर्थः भवान् एकः एव" इति उक्तवान्।

हनूमान्— "यथा प्रभोः आज्ञा" इति उक्त्वा श्वेतकमलं स्वीकृत्य बलात् उत्प्लवनेन आकाशमार्गम् आश्रित्य सूर्यसमीपं गत्वा सूर्यस्य रथं हस्तेन गृहीत्वा— "गुरुदेव! एतत् पुष्पं रघुकुलतिलकः रामः भवते समर्पितवान् अस्ति" इति उक्त्वा श्वेतकमलं सूर्यस्य पादयोः समीपे स्थापितवान्।

सूर्यः हनूमन्तं "चिरं जीवतु" इति आशिषा अनुगृह्य स्वहस्ते स्थितम् एकं श्वेतकमलं हनूमते दत्त्वा— "एतत् रामाय ददातु। एतस्य प्रभावतः रामस्य शासने देशे सुभिक्षं भविष्यति" इति उक्तवान्।

सूर्येण यत् श्वेतपद्मं दत्तं तत् अतिविशिष्टम्। तत् कदापि म्लानं न भवति। तत् यत्र तिष्ठति तत्र काले काले वृष्टिः सस्यसमृद्धिः च भविष्यति। प्रजाः केनचित् व्याधिना अपि पीडिताः न भवन्ति। हनूमान् सूर्यस्य अनुज्ञां प्राप्य श्वेतपद्मं गृहीत्वा प्रस्थाय अयोध्याम् आगत्य रामाय तत् पद्मं दत्तवान्।

रामः महता आनन्देन हनूमन्तम् आलिङ्गितवान्। हनूमान् रामं सीतां चापि भक्त्या नमस्कृतवान्।

सीता— "वत्स! आञ्जनेय! असाध्यकार्यकारिन्! चिरञ्जीवी भवतु भवान्" इति आशिषा अनुगृहीतवती।






# व्यर्थं साहसकार्यम्

पूर्वं निरञ्जननामकः युवकः आसीत्। सः सर्वदा साहसकार्याणि कर्तुम् इच्छति स्म। सः सर्वदा सगर्वं गृहसदस्यान् वदति स्म यत्— मादृशः वीरः धैर्यवान् च अन्यत्र कुत्रापि नास्ति इति। किन्तु निरञ्जनस्य एतादृशं विकत्थनं निरञ्जनस्य पितामहाय न रोचते। अतः सः कदाचित् निरञ्जनम् आहूय उक्तवान्— "वत्स, कांस्यपात्रं यावत् शब्दं करोति तावत् सुवर्णपात्रं न करोति। भवतः व्यवहारः कांस्यपात्रस्य इव न भवेत्। भवान् यावत् कार्यं कर्तुं शक्नोति, तावत् करोतु। भवतः कार्यं दृष्ट्वा जनाः भवतः साहसम् अङ्गीकुर्युः। स्वयं गर्वेण कथनं न उचितम्" इति।

पितामहस्य वचनानि श्रुत्वा निरञ्जनः पृष्टवान्— "मम तु गर्वः नास्ति। मम साहसकार्याणां विषये यदि अहं न वदेयम्, तर्हि जनाः मद्विषयं कथं ज्ञातुं शक्नुयुः?" इति।

तदा पितामहः उक्तवान्— "भवतः वयसः अनुगुणं भवतः बुद्धिः न पक्वा इति तु दुःखस्य विषयः। केवलं सामर्थ्येन किं प्रयोजनम्? यदि भवतः बुद्धिः अस्ति, चिन्तनशक्तिः अस्ति, तर्हि समीपस्थे अरण्ये विद्यमानां युवतिं परिणीय आगच्छतु। तेन भवतः साहसप्रवृत्तिः निरूपिता भविष्यति" इति।

"सा युवतिः का? सा कुत्र अस्ति इति वदतु। तां परिणीय मम सामर्थ्यं निरूपयिष्यामि" इति उक्तवान् निरञ्जनः।

तदा निरञ्जनस्य पितामहः उक्तवान्— "इतः दशयोजनदूरे एकम् अरण्यम् अस्ति। तत्र एका सुन्दरी युवतिः अस्ति। तां सुन्दरीं परिणेतुम् इच्छन्तः बहवः साहसिनः तत्र गतवन्तः। किन्तु एकोऽपि तां परिणेतुं न शक्तवान्। यदि भवतः सामर्थ्यम् अस्ति, तर्हि




तां परिणीय गृहम् आनयतु" इति।

पितामहस्य वचनं श्रुत्वा निरञ्जनः चिन्तितवान् यत्– कथञ्चित् एतत् कार्यं साधनीयम् एव इति। अतः सः अनुक्षणं गृहतः प्रस्थाय एकं दिनं यावत् प्रयाणं कृत्वा अरण्यं प्राप्तवान्।

किञ्चिद्दूरं यदा गतं, तदा वृक्षस्य अधः उपविष्टा काचित् स्त्री निरञ्जनेन दृष्टा। पितामहेन उक्ता एषा एव युवतिः स्यात् इति चिन्तयन् निरञ्जनः तस्याः पृष्ठतः गत्वा पृष्टवान्– "भवती का?" इति।

"अहं पृष्ठतः द्रष्टुं न शक्नोमि। पुरतः आगच्छतु भवान्" इति उक्तवती सा युवतिः।

तस्याः वेणी दीर्घा सुन्दरी च आसीत्। तस्याः वेणीं दृष्ट्वा एव तस्याः सुन्दरं मुखं कल्पयन् निरञ्जनः पुरतः आगतवान्। तस्याः शरीरं तु अतीव सुन्दरम् आसीत्। किन्तु तस्याः मुखस्य स्थाने पूर्णं रिक्तम् आसीत्। शून्याकारे वेणी योजिता इव दृश्यते स्म। एतादृशं तस्याः रूपं यदा आश्चर्येण निरञ्जनः पश्यन् आसीत्, तदा सा महिला उक्तवती– "एतादृशाः सुन्दराः पुरुषाः लोके भवन्ति इति इतःपूर्वं न श्रुतं, न दृष्टम् च। भवादृशं सुन्दरं युवकं परिणेतुं मम भाग्यम् अस्ति वा न वा इति देवः एव जानाति। यतः यः त्रीणि साहसकार्याणि करोति सः एव मां परिणेतुम् अर्हति, नान्यः" इति।

तदा निरञ्जनः उक्तवान्– "साहसानि त्रीणि वा भवन्तु, त्रिंशत् वा भवन्तु, अहं करोमि एव। प्रथमं भवत्याः विषयं विस्तरेण वदतु" इति।

तदा सा युवतिः उक्तवती– "अहं काचन राजकुमारी। मम सौन्दर्येण आकृष्टाः बहवः राजकुमाराः मां परिणेतुम् इष्टवन्तः। ते सर्वेऽपि यदि स्वयंवरं प्रति आहूयन्ते तर्हि कोलाहलः भवेत्, क्लेशः च भवेत् इति विचिन्त्य 'काचित् परीक्षा आयोजनीया' इति निश्चितवान् मम पिता। तदा केचन मम पितरं सूचितवन्तः यत् अरण्यस्थस्य भस्माक्षनामकस्य मान्त्रिकस्य मार्गदर्शनं स्वीकृतं चेत् वरम् इति। एतत् अङ्गीकुर्वन्

मम पिता कदाचित् मया सह एतत् अरण्यम् आगतवान्। मम दर्शनमात्रेण मयि अनुरक्तः भस्माक्षः अनुक्षणं मम पितरम् इतः प्रतिप्रेषितवान्। मां परिणयतु इति सः भस्माक्षः मां साग्रहम् उक्तवान्। किन्तु अहं निराकृतवती। विवाहविषये वध्वाः अङ्गीकारे असति अपि बलात् यदि परिणीयते तर्हि तस्य मन्त्रशक्तयः नश्यन्ति। अतः सः मान्त्रिकः माम् अत्र बन्धने स्थापयित्वा, प्रतिदिनम् आगत्य 'विवाहम् अङ्गीकरोतु' इति मां पीडयति'' इति।

एतत् सर्वं श्रुत्वा कुतूहलेन उक्तवान् निरञ्जनः– ''भवत्याः शरीरसौन्दर्यम् इव वचनानि अपि मधुराणि एव। किन्तु अहं भवत्याः मुखसौन्दर्यम् एव द्रष्टुं न शक्नोमि खलु?'' इति।

तदा सा युवतिः उक्तवती– ''पश्यतु, पुरतः विद्यमानस्य वृक्षस्य शाखायां एकः भूतदर्पणः लम्बमानः अस्ति। तस्य वृक्षस्य आरोहणं महते क्लेशाय। यतः तस्य वृक्षस्य प्रतिशाखम् अपि विषसर्पाः सन्ति। वृक्षस्य आरोहणं विना अधस्तात् एव उत्प्लुत्य यदि सः दर्पणः स्वीक्रियते तर्हि क्लेशः नास्ति। तस्मिन् दर्पणे मम मुखं दृश्यते। भवता शक्यं चेत् प्रयत्नं करोतु'' इति।

युवत्याः वचनेन उत्साहितः निरञ्जनः वृक्षस्य समीपं गतवान्। अधस्तात् उत्प्लुत्य दर्पणं स्वीकर्तुं प्रयत्नं कृतवान्। किन्तु



निरञ्जनः यथा यथा उत्प्लवते तथा तथा वृक्षस्य शाखाः अपि उपरि गच्छन्ति स्म। निरञ्जनः अधः आगच्छति चेत् शाखाः अपि अधः आगच्छन्ति स्म।

तस्मिन् वृक्षे मान्त्रिकी शक्तिः अस्ति इति चिन्तितवान् निरञ्जनः। सः किञ्चित्कालं दर्पणम् एव परीक्षादृष्ट्या पश्यन् अधः उपविष्टवान्। तावति काले वृक्षस्य शाखा अधः आगता। तदा निरञ्जनः झटिति उत्प्लुत्य भूतदर्पणं गृहीतवान्।

निरञ्जनस्य एतत् साहसं दृष्ट्वा ''साधु, वीर साधु!'' इति उक्तवती युवतिः।

तस्मिन् दर्पणे युवत्याः सुन्दरं मुखं दृश्यते स्म। तस्याः मोहकसौन्दर्येण मोहितः



निरञ्जनः पृष्टवान्– "हे राजकुमारि, अहं भवतीं परिणेतुम् इच्छामि। मया कीदृशानि साहसकार्याणि करणीयानि वदतु" इति।

तदा राजकुमारी उक्तवती– "पुरतः यः पर्वतः दृश्यते तस्मिन् एका गुहा अस्ति। तस्यां गुहायां भस्माक्षनामकः मान्त्रिकः निद्रां कुर्वन् भवति। भस्माक्षस्य रक्षणार्थं गुहायाः द्वारे पिशाचरूपः कश्चन मृगः अस्ति। तस्य पिशाचस्य दीर्घं दन्तद्वयम् अस्ति। प्रथमं सः पिशाचः मारणीयः। अनन्तरं तस्य दन्तौ प्राप्तव्यौ। पिशाचस्य दन्ताभ्यां मान्त्रिकस्य उरसि तुम्फनं क्रियते चेत् एव मान्त्रिकः मृतः भविष्यति" इति।

राजकुमार्याः वचनं श्रुत्वा निरञ्जनः अनुक्षणं ततः पर्वतं गतवान्। तत्र गुहा आसीत्। गुहायाः द्वारे एव कश्चन भयङ्करः पिशाचः आसीत्। तस्य पिशाचस्य दीर्घौ दन्तौ अतीव भयङ्करौ आस्ताम्। निरञ्जनं दृष्ट्वा सः पिशाचः विकारशब्दम् अकरोत्। निरञ्जनः धैर्येण लवित्रं आकृष्टवान्।

तावति काले सः पिशाचः तं निरञ्जनं हस्तेन गृह्णन् उक्तवान्– "सलवित्रं भवन्तम् इदानीम् एव खादिष्यामि" इति।

झटिति निरञ्जनः लवित्रेण पिशाचस्य दन्तौ भञ्जितवान्। अपरक्षणे एव पिशाचः भयङ्करं शब्दं कुर्वन् भूमौ पतितवान्। लुण्ठनं कुर्वन् मरणं प्राप्तवान् च।

अनन्तरं निरञ्जनः पिशाचस्य दन्तौ स्वीकृत्य गुहां प्रविष्टवान्। भस्माक्षः निरातङ्कं निद्रां कुर्वन् आसीत्। निरञ्जनः भस्माक्षसमीपं गत्वा पिशाचस्य दन्ताभ्यां भस्माक्षस्य उरसि घट्टितवान्। अपरक्षणे एव भस्माक्षस्य शरीरम् अग्निना आवृतम्। क्षणाभ्यन्तरे एव मान्त्रिकः भस्मसात् जातः।

मान्त्रिकस्य मरणेन सन्तुष्टः निरञ्जनः ततः राजकुमार्याः समीपं गत्वा प्रवृत्तं सर्वं निवेदितवान्। राजकुमारी निरञ्जनस्य साहसं श्रुत्वा उक्तवती– "साधु, साधु। वस्तुतः भवान् धीरः, प्रशंसायोग्यः च। किन्तु भवता करणीयानि कार्याणि इतोऽपि सन्ति। प्रथमे साहसे भवान् जयं प्राप्तवान्। इदानीं भवता द्वितीयं साहसं करणीयम्" इति।

"किं तत् द्वितीयं साहसम्?" इति पृष्टवान् निरञ्जनः।

तदा राजकुमारी उक्तवती– "अत्रैव समीपे मकराणां सरोवरम् अस्ति। तस्य सरोवरस्य मध्ये एकं सुन्दरं पुष्पम् अस्ति। तत् पुष्पम् आनीय तस्य पुष्पस्य गन्धं मया यदि घ्रापयति, तर्हि भूतदर्पणं विना एव भवान् मम मुखस्य सौन्दर्यं स्पष्टं द्रष्टुं शक्नोति। तदा अहम् अपि बन्धनतः विमुक्ता भविष्यामि" इति।

राजकुमार्याः वचनानुसारं निरञ्जनः मकराणां सरोवरं गतवान्। तत्र सरोवरे सर्वे मकराः मुखम् उद्घाट्य शयिताः सन्ति। सरोवरस्य मध्ये सुन्दरं पुष्पं शोभमानम् अस्ति। मकराणां मध्ये गत्वा कथं पुष्पस्य आनयनम् इति बहुधा चिन्तितवान् निरञ्जनः। अन्ते कश्चन उपायः स्फुरितः। परितः विद्यमानाः लताः योजयित्वा एकां रज्जुं निर्मितवान् निरञ्जनः। अनन्तरम् रज्ज्वाः एकं पार्श्वं सरोवरस्य दक्षिणपार्श्वे विद्यमाने कस्मिंश्चित् वृक्षे दृढं बद्धवान्।

अनन्तरं निरञ्जनः रज्ज्वाः साहाय्येन सरोवरस्य मध्यभागम् आगतवान्। पुष्पसमीपं गतः अधोमुखः भूत्वा झटिति पुष्पम् उत्पाटितवान्। अनुक्षणं रज्ज्वाः साहाय्येन पुनः सरोवरस्य तीरं प्राप्तवान्। अनन्तरं पुष्पं नीत्वा राजकुमार्यै दत्तवान्।

पुष्पस्य गन्धम् आघ्राय राजकुमारी



शिलातः उत्थितवती। तदा भूतदर्पणस्य साहाय्यं विना एव राजकुमार्याः मोहकं सौन्दर्यं द्रष्टुं शक्तवान् निरञ्जनः महता सन्तोषेण उक्तवान्– "राजकुमारि! अहं जयं साधितवान् एव। इतः परं भवतीं परिणेतुं स्वतन्त्रः अहम्" इति।

तदा राजकुमारी उच्चैः हसन्ती उक्तवती– "किमर्थम् एतावान् उत्साहः? भवता करणीयं तृतीयं साहसं तथैव अस्ति। तत् साधयितुं भवान् सर्वथा न शक्नोति" इति।

तदा "किं तत् तृतीयं साहसम्? वदतु शीघ्रम्" इति उक्तवान् निरञ्जनः।

"आवयोः विवाहः एव तृतीयं साहसम्"

इति उक्तवती सा युवतिः।

तदा निरञ्जनः पृष्टवान्– "भवतीं परिणेतुं साहसानि करणीयानि इति तु अङ्गीक्रियते मया। किन्तु भवत्याः परिणयः एव एकं साहसं कथं भवति?" इति।

"तर्हि मम वास्तविकं रूपं पश्यतु। अहम् एका पिशाची" इति वदन्ती सा युवतिः पिशाचरूपं प्राप्तवती। तस्याः पिशाच्याः विकृतं रूपं दृष्टवतः निरञ्जनस्य हृदये कम्पनम् आरब्धम्।

निरञ्जनस्य परिस्थितिं ज्ञात्वा पिशाची उक्तवती– "यदि भवान् इच्छति, तर्हि आवयोः विवाहः भविष्यति। नो चेत् भवान् ग्रामं गन्तुम् अर्हति" इति।

पिशाच्याः कथनसमये एव ततः पलायितः निरञ्जनः स्वस्य पितामहसमीपं गतवान्।

निरञ्जनस्य कथां समग्रां श्रुत्वा पितामहः उक्तवान्– "भवता तृतीयं साहसं न कृतम् किल!" इति।

तदा निरञ्जनः उक्तवान्– "तृतीयं साहसं न कृतवान्, सत्यम्। किन्तु प्रथमं द्वितीयं च साहसं कृतवान्। एतत् तु महत् एव। सामान्यैः जनैः कर्तुम् अशक्यं च" इति।

तदा पितामहः मन्दहासपूर्वकम् उक्तवान्– "यदि तृतीयं साहसं न कृतवान् तर्हि प्रथमेन द्वितीयेन च साहसेन किं प्रयोजनम्? तत् साहसद्वयम् अपि व्यर्थं किल! अपि च घोरम् अरण्यं प्रति भवन्तं प्रेषितवान् अहम्। किमर्थम् इति भवता परिशीलितं वा? तादृशे घोरे अरण्ये अपि भवतः काऽपि विपत् न सम्भवति इति ज्ञात्वा एव अहं भवन्तं तत्र प्रेषितवान्। यतः पिशाच्याः समग्रः व्यवहारः मया स्वानुभवात् ज्ञातः आसीत्। यदि भवतः विवेकः स्यात्, तर्हि भवान् तस्याः युवत्याः समग्रं विषयं ज्ञात्वा अगमिष्यत्। यदि विवेकेन व्यवहरति, तर्हि निष्प्रयोजकानि साहसानि करणीयानि न भवन्ति। अतः इतः परं वा वस्तुस्थितिं ज्ञात्वा व्यवहरतु" इति।

पितामहस्य वचनेन लज्जितः निरञ्जनः पितामहं क्षमां प्रार्थितवान्।





# वास्तविकः स्नेहितः

कस्मिंश्चित् ग्रामे कश्चन धनिकः आसीत्। तस्य एकः एव पुत्रः। पुत्रः यदा प्रौढः जातः तदा पिता पुत्रम् आहूय उक्तवान्– "वत्स, जीवने धनं कीर्तिम् च सम्पादयितुं शक्नुयाम। किन्तु स्नेहस्य सम्पादनं महते क्लेशाय। अतः भवान् कथमपि प्रयत्नेन उत्तमानि मित्राणि सम्पादयतु" इति।

तस्मात् दिनात् आरभ्य पुत्रः केषाञ्चन स्नेहम् आरब्धवान्। शीघ्रातिशीघ्रम् एव बहवः युवकाः तदीयं स्नेहम् इच्छन्तः तस्य समीपम् आगतवन्तः।

कानिचन दिनानि अतीतानि। कदाचित् पिता पुत्रम् आहूय पृष्टवान्– "वत्स, उत्तमानि मित्राणि लब्धानि वा?" इति।

"आं तात, बहूनि मित्राणि लब्धानि" इति उक्तवान् पुत्रः।

तदा पिता आश्चर्येण पृष्टवान्– "ते सर्वेऽपि वास्तविकाः स्नेहिताः वा?" इति।

तदा पुत्रः किञ्चित् विचिन्त्य उक्तवान्– "मम मित्रेषु वास्तविकानि मित्राणि दश वा स्युः" इति।

"बहूनां वर्षाणां मम जीवने वास्तविकानि मित्राणि द्वित्राणि प्राप्तानि स्युः मया। एवं स्थिते, अल्पे एव काले भवान् दश मित्राणि सम्पादितवान् इति तु महत् आश्चर्यकरम्" इति उक्तवान् पिता।

तदा पुत्रः पितुः संशयं निवारयितुम् इच्छन् उक्तवान्– "ते सर्वेऽपि मदर्थं प्राणान् अपि दातुं सिद्धाः सन्ति" इति।

तदा पिता उक्तवान्– "ते सर्वे वास्तविकाः स्नेहिताः वा न वा इति ज्ञातुम् एकां परीक्षाम् आयोजयतु। किन्तु भवान् परीक्षां कुर्वन् अस्ति इति ते न जानीयुः" इति।

तदा पुत्रः पृष्टवान्– "कीदृशी परीक्षा

आयोजनीया?" इति।

तदा पिता उक्तवान्– "भवान् एकं वराहं मारयित्वा तं वराहं एकस्यां गोण्यां पूरयतु। अनन्तरम् तां गोणीं स्कन्धे आरोप्य भवतः एकैकस्यापि स्नेहितस्य समीपं गत्वा भवान् वदतु– 'मया क्रोधावेशेन कश्चित् मारितः। किन्तु एषः विषयः यदि आरक्षकैः ज्ञायते तर्हि मम मरणदण्डनं निश्चितम्। अतः कृपया साहाय्यं करोतु' इति। तदा भवतः स्नेहिताः यदि साहाय्यं करिष्यन्ति तर्हि ते वास्तविकाः स्नेहिताः एव इति निर्णीतं भविष्यति" इति।

पित्रा यथा सूचितं तदनुसारं पुत्रः मृतं कञ्चन वराहं गोण्यां संस्थाप्य एकैकस्यापि स्नेहितस्य समीपं गत्वा साहाय्यं पृष्टवान्। किन्तु कोऽपि स्नेहितः तस्य साहाय्यं कर्तुं न इष्टवान्।

तस्य एकः स्नेहितः उक्तवान्– "अस्यां परिस्थित्यां अहं कथं वा साहाय्यं कर्तुं शक्नुयाम्? एतेन शवेन सह भवान् मम समीपम् आगतवान् इति विषयं बहिः कुत्रापि मा वदतु कृपया।" इति।

द्वितीयः स्नेहितः उक्तवान्– "भवतः परिस्थितिं दृष्टवतः मम महत् दुःखं भवति। मम जीवने भवन्तं कदापि न विस्मरामि" इति।

तृतीयः स्नेहितः उक्तवान्– "इदानीं भवन्तम् आरक्षकाः गृह्णन्ति। मरणदण्डनं च भविष्यति भवतः। भवतः मरणानन्तरं भवतः शवस्य शोभायात्रां कारयित्वा अन्त्यसंस्कारं सवैभवं करिष्यामि" इति।



सर्वेऽपि अन्यान्यकारणैः तस्य साहाय्यं निराकृतवन्तः। अनन्तरं पुत्रः पितुः समीपम् आगत्य प्रवृत्तं सर्वं निवेदितवान्।

सर्वं श्रुत्वा पिता उक्तवान्– "मम केवलं द्वित्राः स्नेहिताः सन्ति इति मया पूर्वम् उक्तम् आसीत् इति भवान् स्मरेत्। ते केन प्रकारेण भवतः साहाय्यं कुर्युः इति परीक्षां कुर्मः। इदानीम् एव तेषां समीपं गत्वा साहाय्यं प्रार्थयतु" इति।

पुत्रः गोणीं पुनः स्कन्धे आरोप्य पितुः सामान्यस्य स्नेहितस्य समीपं गतवान्। स्वकीयां परिस्थितिं निवेदितवान् च। तदा पितुः स्नेहितः उक्तवान्– "इतःपूर्वं भवन्तं न दृष्टवान् अहम्। किन्तु भवतः पिता मम स्नेहितः इति कारणतः अहं भवतः साहाय्यं करोमि" इति उक्त्वा गोणीं स्वीकृतवान्। उद्याने एकं गर्तं कृत्वा तां गोणीं तत्र स्थापितवान्, मृत्तिकया गर्तम् आच्छादितवान् च।

ततः गृहं गत्वा पुत्रः सर्वं पितरं निवेदितवान्। तदा पिता कर्मकरम् आहूय उक्तवान्– "भवान् इदानीम् एव गत्वा ग्रामरक्षकं वदतु यत्– मम स्वामिनः पुत्रः एकं मनुष्यं मारयित्वा शवं गोण्यां संस्थाप्य स्वामिनः मित्रस्य गृहं नीतवान्, मम स्वामिनः स्नेहितः रहस्येन तां गोणीं उद्याने गर्तं कृत्वा स्थापितवान् अस्ति इति" इति।

कर्मकरः स्वामिनः वचनस्य अनुसारं ग्रामरक्षकसमीपं गत्वा स्वामिना उक्तं विषयं निवेदितवान्। अनुक्षणं ग्रामरक्षकः तत् स्थानं



गत्वा उद्याने खननं कृत्वा दृष्टवान्। तत्र गोणी आसीत्।

तदा धनिकस्य सामान्यः स्नेहितः रक्षकम् उक्तवान्– "भोः, एषः मम गृहम् आगतवान् इति तु सत्यम्। एतस्य पितरम् अपि अहं जानामि। किन्तु इतःपूर्वं कदापि मया न दृष्टः एषः। अहं यथा न जानीयाम्, तथा एषः एव मम उद्याने तां गोणीं स्थापितवान् स्यात्। एतद्विषये अहं किमपि न जानामि" इति।

तावता धनिकस्य पुत्रः पितुः द्वितीयस्य स्नेहितस्य समीपं गत्वा उक्तवान्– "भोः, अहम् उद्वेगेन एकं मनुष्यं मारितवान्। मम पितुः कश्चन स्नेहितः शवयुक्तां गोणीं स्वकीये उद्याने स्थापयित्वा मां रक्षितवान्। किन्तु एषः विषयः कथमपि सर्वैः ज्ञातः। मम मरणदण्डनं निश्चयेन भविष्यति। केनापि प्रकारेण भवता अहं रक्षणीयः" इति।

धनिकपुत्रस्य वचनं श्रुत्वा धनिकस्य स्नेहितः अनुक्षणं ततः ग्रामरक्षकसमीपं गतवान्, उक्तवान् च– "भोः, एतादृशे उत्तमे बालके भवान् हननारोपं कृतवान् इति श्रुतवान् अहम्। वस्तुतः एषः हननं न कृतवान्। मम पुत्रः तं मनुष्यं मारितवान्। येन अपराधः क्रियते तेन एव किल तस्य फलम् अनुभोक्तव्यम्? अनिवार्यकारणतः एषः विषयः मया वक्तव्यः आपतितः। अतः निरपराधम् एतं बालं त्यजतु। अपराधिनः मम पुत्रस्य दण्डनं भवतु" इति।

मित्रस्य एतादृशवचनानि श्रुत्वा धनिकः पुत्रम् उक्तवान्– "वत्स, वास्तविकः स्नेहितः आपत्काले कीदृशं साहाय्यं करोति इति ज्ञातवान् किल। सर्वेऽपि वास्तविकाः स्नेहिताः न भवन्ति" इति उक्तवान्।

अनन्तरं धनिकः ग्रामरक्षकसमीपं गत्वा प्रवृत्तं सर्वं निवेद्य उक्तवान्– "तस्यां गोण्यां मनुष्यस्य शवः नास्ति। मृतः कश्चन वराहः अस्ति। यदि इच्छति, तर्हि भवान् उद्घाट्य द्रष्टुम् अर्हति" इति।

ग्रामरक्षकः अनुक्षणं गोणीम् उद्घाट्य दृष्टवान्। मृतं वराहं दृष्ट्वा सः चकितः।



## प्रकृतिवैचित्र्याणि–



### गोरिल्लाप्राणिनः

मनुष्याः इव गोरिल्लाप्राणिनः अपि ऋजुतया चलितुं समर्थाः भवन्ति। किन्तु तेषां पृष्ठास्थि मानवानाम् इव अवनमनयोग्यं न भवति इत्यतः ते अचिरात् एव श्रान्तिं प्राप्य चतुष्पादाः इव सञ्चरन्ति। गोरिल्ला प्रायः आकारेण चिम्पाञ्जी गिब्बन्, उराङ्गु, उटान् इत्यादीन् पशून् अनुकरोति। 'पुच्छरहितः कपिः इव एषः' इति एतस्य स्वरूपं निरूपयितुं शक्नुमः वयम्। मानवानाम् इव गोरिल्लाप्राणिनाम् अपि ३२ दन्ताः भवन्ति। किन्तु पार्श्वदन्तौ तीक्ष्णौ दीर्घौ च सन्तौ दंष्ट्रायेते। पञ्चाङ्गुलियुक्तः करः अपि मानवानाम् इव एव। एतस्य पादौ करसदृशौ। अत एव एते हस्ताभ्याम् इव पादाभ्याम् अपि वृक्षशाखां दृढं ग्रहीतुं शक्नुवन्ति। एते उत्थाय शाखाः उत्पाट्य पर्णानि विक्षिप्य शत्रौ भयं जनयन्ति। किन्तु कदापि स्वयम् आक्रमणं न कुर्वन्ति। मानवाः इव उरस्ताडनपूर्वकम् उच्चध्वनिम् अपि कुर्वन्ति एते कदाचित्।

### वेणुः न वृक्षः, अपि तु तृणम्

अत्युन्नतं वर्धमानं तृणं किम्? उत्तरं तु वेणुः इति। वेणुः ३५ मीटरोन्नतं यावत् प्रायः प्रवर्धते। एतस्य वर्धनवेगः नितराम् आश्चर्यकरः। एकदिनाभ्यन्तरे वेणुः ९० सें.मी. दैर्घ्यं यावत् वर्धते। आकारः वर्णः इत्यादीनां भेदात् वेणुषु सहस्राधिकजातयः सन्ति इति परिगण्यते। जातिविशेषे जाताः वेणवः केचन षष्टिवर्षाणां, शतवर्षाणां, सपादशतवर्षाणाम् अनन्तरं वा कदाचित् पुष्प्यन्ति। किन्तु आश्चर्यं नाम सुदूरस्थाः अपि समानजातीयाः वेणवः समानकाले एव पुष्पिताः भवन्ति। भारते, चीनादेशे, जपानदेशे च वेणवः विशेषतः दृश्यन्ते।

### गृहगोधिकानां पादानां वैशिष्ट्यम्

वयं स्वगृहेषु दृष्टवन्तः स्याम यत् गृहगोधिकाः भित्तिं छदिं वा अवलम्ब्य लीलया अधोमुखम् अपि सञ्चरन्ति इति। छदिम् अवलम्ब्य गच्छन्त्यः अपि ताः कदापि न पतन्ति। एतत् कथं सम्भवति इति वयम् आश्चर्यं प्राप्तवन्तः स्याम कदाचित्। यदा गृहगोधिकाः काचकमयस्य वातायनस्य उपरि सञ्चरन्त्यः भवन्ति तदा एतासां पादाः परिशीलिताः चेत् ज्ञायते यत् पादतले चर्मपटलं भवति इति, तत्र असङ्ख्यानि चर्माङ्कुराणि भवन्ति इति च। एतेषाम् आधारेण एताः अतिमसृणम् अपि पदार्थं सुदृढं ग्रहीतुं शक्नुवन्ति। यदा गृहगोधिका एकं पादम् उन्नयति तदा भूमिस्थे पादे स्थितं चर्मपटलं सङ्कोचं विकासं च प्राप्नोति।



Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!






SUPER
RUBBER








THE

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां डिसेम्बर्-९३ मासे प्रकटयिष्यामः।



M. Natarajan



M. Natarajan

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'अगस्ट्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **आयाहि, क्रीडाव, अनुकरोतु तावत्।**

द्वितीयचित्रम् - **गृह्णामि ते चित्रं, रे हसतु किञ्चित्।**

प्रेषकः - तिप्पेशः, २०८२/१, ३ मुख्यमार्गः ३ उपमार्गः, एं.सि.सि. 'ए' ब्लाक्, पि.जे. एक्सेटेन्षन्, दावणगेरे-४




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

